"तपसा ब्रह्म विजिज्ञासस्व" ( तैत्ति. उप. ३।३ ) "ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि तद् विद्याद् आत्मनो मायाम्" ( भाग. पुरा. २।९।३५ ) इत्यादिवाक्यात्.

लौकिकस्तु पञ्चविधः [पा.भे.१२] :—

(क) संयोगः (ख) तादात्म्यं (ग) संयुक्ततादात्म्यं
(घ) संयुक्तविशेषणतादात्म्यं (ङ) स्वरूपं च

इति भेदात्.

तत्र चक्षुषा द्रव्यग्रहे संयोगएव प्रत्यासत्तिः.

**केचित्तु** *इतरेन्द्रियवैलक्षण्यात् चक्षुषो अप्राप्यप्रकाशकारित्वं स्वीकृत्य दूरत्व-व्यवधानाभाव-सहकृतयोग्यता-मात्रेण प्रतीतिनिर्वाहात् तत्संयोगं न* **स्वीकुर्वन्ति.**

**अन्येतु** *नेत्रेन्द्रियगोलकस्य स्वच्छत्वेन तत्र वस्तुनः प्रतिबिम्बे सति योग्यतामात्रेण मायाद्वारिकां प्राप्तिं स्वीकृत्य संयोगस्य द्वारत्वं* **खण्डयन्ति.**

तद् उभयमपि असङ्गतं, भगवता संयोगस्वीकारात्, "चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि तत्र मां मनसा ध्यायन् विश्वं पश्यति दूरतः" ( भाग. पुरा. ११।१५।२० ) इति एकादशे भगवद्वाक्यात्. अत्र तत्तत्प्रतियोगिकसंयोगद्वयनिरूपणेन योग्यता-प्रतिबिम्ब-पक्षानङ्गीकारात्, [टि.१] "दूरे घटं पश्यामि...-निकटे हरिं पश्यामि" इत्यादि सार्वजनीनाबाधितप्रत्ययात् च, निबिडतम-काचाद्यन्तरितोपलब्धिस्तु अग्नेः स्थालीभेदकत्ववत् चक्षुःकिरणानां स्वच्छकाचादिभेदकत्वादपि सङ्गच्छते. अतएव गोलकस्य सच्छिद्रतापि निरस्ता ज्ञेया. ध्रुवादिविषयपर्यन्तं गतानां पुनः अन्तःप्रवेशस्तु मनसइव वेगादपि सम्पद्यते. एवं दूषणान्तरमपि निरसनीयम्, अस्य शास्त्रस्य अकाल्पनिकत्वात्. प्रतिबिम्बस्तु अदण्डवारितत्वाद् भवति. तेन मायापि प्रत्याययतीति चक्षुषा भूयोज्ञानम् उत्पद्यते तेजस्संयोगबाहुल्यइवेति न तस्य गतार्थता. अतएव इन्द्रियान्तरापेक्षया

चक्षुषा भूयोज्ञानमपि युज्यते. तस्माद् अग्नि चक्षुषः संयोगो द्रव्यग्रहणे व्यापारः.

सएव योग्य-गुण-क्रिया-जाति-साक्षात्कारेऽपि उपयुज्यते. तेषां वस्तुतो द्रव्याभिन्नत्वात्. संयुक्ततादात्म्यं वा अस्तु. एवं त्वग्-घ्राण-रसन-ग्रहणेऽपि ज्ञेयम्. श्रोत्रेण शब्दग्रहणेतु संयोगएव व्यापारः. शब्दोहि वायुना अपनीतः श्रोत्रपर्यन्तं यदा आयाति तदा श्रोत्रावच्छिन्नत्वचा वाहकवायुसंयोगे तमेव संयोगं व्यापारयित्वा श्रोत्रेन्द्रियेण शब्दो गृह्यते. शब्द-ग्राहक-सामग्री-प्राबल्येन [टि.२] संयोगाश्रयस्य वायोः अप्रत्यक्षत्वात् न तस्य संयोगस्य ग्रहणम्. संयोगग्राहकसामग्रीप्राबल्येतु संयोगस्यापि ग्रहणं. यथा कर्णाभ्यर्णम् आगतस्य वार्ताश्रवणे वक्तृ-मुख-वायु-संयोगस्य. अभावे विशेषणतेव, शब्दग्रहे संयुक्त-वायूढ-शब्द-स्वरूपमेव वा द्वारम्.

मनसस्तु बहिर्विषये स्वसंयोगद्वारकः इन्द्रियसंयोगादिः, स्वधर्माणां ज्ञानसुखादीनां ग्रहणे तादात्म्यं, वृत्तीनां ग्रहणेतु वृत्तिस्वरूपमेव द्वारम्.

तिरोभावस्तु इन्द्रिय-संयुक्त-विशेषणतया गृह्यते.

<u>सदसदात्मकवस्तुनः असत्ताग्रहणे अनुपलब्धिः प्रमाणम् इति मतस्य विमर्शे पार्थसारथिमतम्</u> :

**पार्थसारथिमिश्रास्तु** *वस्तुमात्रं सदसदात्मना द्विविधम्. तत्र यद् यदा यत्र सद्रूपेण वर्तते तत् तत्र तदा प्रत्यक्षादिभिः 'अस्ति' इति प्रमीयते. यदातु असद्रूपेण वर्तते, तदा सद्रूपबोधकानां प्रत्यक्षादीनाम् अकिञ्चित्करत्वाद्, योग्यानुपलब्धिरूपेण तद् वस्तु 'नास्ति' इति प्रमीयते. तस्माद् योग्यानुपलब्धि-रूप-प्रमाणान्तर-गम्यएव अभावः. योग्यानुपलब्धिश्च स्वरूपसती कारणं नतु ज्ञानमपि तस्याः अपेक्षितम्. अन्यथा तस्याअपि प्रमेयत्वात् प्रमाणापेक्षायां अनवस्थापत्तेः. नच *अन्धकारे हस्ताभ्यां वस्तुनः सर्वतः परामर्शे, जातायामपि योग्यानुपलब्धौ "किं कश्चिद् देशो अवशिष्टः!"

इति सन्दिहानस्य वस्त्वभावबुद्ध्यनुदयात्. कदाचिद् अपरामृष्यापि सर्वतः परामृष्टम् इति भ्रान्त्या योग्यानुपलब्धिनिश्चये वस्त्वभावबुद्ध्युदयात् तस्याः ज्ञातायाएव कारणत्वम् * इति शंक्यं. तादृशबुद्ध्यनुदयादेः योग्यानुपलम्भीय-योग्यताऽज्ञानज्ञानकृतत्वात्. तद्योग्यतायाः ज्ञातायाएव उपयोगेऽपि अनुपलब्धेः स्वरूपसत्याएव कारणत्वेन अदोषात्. नच *अभावज्ञानम् इन्द्रियेणैव अस्तु! * इति शंक्यम्. इन्द्रियव्यापाराभावेऽपि तज्ज्ञानदर्शनात्. केनचित् प्रातरेव आगते माथुरे दीर्घतमे शुक्लवाससि पुंसि, मध्याह्ने पृष्टे, श्रोतुः प्रतियोग्यस्मरणादेव प्रातःकालीनतदभावज्ञानस्य अनुभव- साक्षिकत्वात्. नच *प्रातः अवगतो अभावः तदा स्मर्यते * इति वाच्यं, प्रातः प्रतियोगिनः कथञ्चिदपि बुद्धौ अनारोहात्, तत्प्रतियोगिकस्य अभाव- स्यापि तथात्वेन, तत्स्मरणस्य सर्वथैव अशक्यवचनत्वात्. एवं सिद्धे योग्यानुपलब्धेः कारणत्वे यत्र इन्द्रियव्यापारानुपरमे सन्निहित-देश-काल-वर्ती अभावः प्रतीयते तत्रापि सैव कारणं नतु इन्द्रियादिकम् * इति आहुः.

इह केवलाद्वैतवादिनः वेदान्तपरिभाषाकारस्य मतम् :

**वेदान्तपरिभाषायान्तु** *योग्यानुपलब्धेः कारणत्वेऽपि किं तत्स्वरूपं (१) योग्यस्य प्रतियोगिनो अनुपलब्धिः इति वा? (२) योग्ये अधिकरणे प्रतियोगिनो अनुपलब्धिः इति वा? (३) योग्यत्वविशिष्टानुपलब्धिः इति वा? (१) न आद्यः, स्तम्भे पिशाचभेदाप्रत्यक्षत्वापत्तेः. (२) न द्वितीयः, आत्मनि धर्माद्यभावस्यापि प्रत्यक्षत्वापत्तेः. (३) तृतीयस्तु स्यात्, कर्मधारयाश्रयणात्. तस्याः योग्यत्वन्तु तर्कित-प्रतियोगिसत्त्व-प्रसञ्जित-प्रतियोगिकत्वम्. तदर्थश्च गृह्यमाणस्य अभावस्य यः प्रतियोगी तस्य सत्त्वेन, अधिकरणे तर्कितेन, यस्याः अनुपलब्धेः प्रतियोगिभूतम् उपलब्धिस्वरूपम् आपादयितुं शक्यते तादृशत्वम्. स्फीतालोकवति भूतले ''यदि घटः स्यात् तदा उपलभ्येत'' इति आपादयितुं शक्यत्वात्, तादृशस्थले घटाभावो अनुपलब्धिगम्यः. अन्धकारेतु तादृशापादनासम्भवात् न अनुपलब्धिगम्यः. अतएव स्तम्भे पिशाचसत्त्वे स्तम्भवत् प्रत्यक्षतापत्त्या तत्र तदभावो अनुपलब्धिगम्यः. आत्मनि धर्माद्यसत्त्वेऽपि आत्मनो अतीन्द्रियत्वेन निरुक्तोपलम्भापादनासम्भवात् न अनुपलब्धिगम्यः.

नच * अधिकरणेन्द्रियसन्निकर्षस्थले, उक्तरीत्या, अभावस्य अनुपलब्धिगम्यत्वं तव अनुमतम्. तत्र इन्द्रियान्वयव्यतिरेकानुविधानाद् इन्द्रियस्यैव अभावाकारवृत्तौ कारणता अस्तु * इति वाच्यं, प्रतियोग्यनुपलब्धेः अभावग्रहे हेतुतायाः क्लृप्तत्वेन करणत्वमात्रस्य अधिकस्य कल्पनात्, इन्द्रियस्य अभावेन समम् असन्निकर्षाद् अभावग्रहहेतुत्वाभावाद्, इन्द्रियान्वयव्यतिरेकयोः अधिकरणज्ञानाद्युपक्षीणत्वेन तेषाम् अन्यथासिद्धत्वात् च. * ननु "भूतले घटो न" इत्यादौ भूतलांशे ज्ञानस्य प्रत्यक्षत्वम् उभयसम्मतं, तत्र वृत्तिनिर्गमने भूतलावच्छिन्नचैतन्यवत् तन्निष्ठ-घटाभावावच्छिन्न-चैतन्यस्यापि प्रमात्रभिन्नतया घटाभावस्यापि प्रत्यक्षतैव आयाति * इति चेत्, न, तस्याः प्रतीतेः प्रत्यक्षत्वेऽपि तत्करणस्य न प्रत्यक्षत्वं "दशमः त्वम् असि" इत्यादि-वाक्य-जन्य-ज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणस्य वाक्यस्य प्रत्यक्षानन्तःपातित्वाभ्युपगमात्. नच * फलवैजात्यं विना कथं प्रमाणवैजात्यम् * इति शंक्यं, वृत्तिवैजात्यमात्रेण प्रमाणवैजात्योपपत्तेः. तस्माद् अभावस्य अनुपलब्धिगम्यत्वमेव * इति **उक्तम्**.

<u>इह कणभक्षाक्षपादमते</u> :

**वैशेषिकास्तु**, उक्तरीतिकामेव योग्यानुपलब्धिं स्वीकृत्य, * स्फीतालोके तत्सहकृतेन चक्षुषा, तमसि च तादृशा त्वचा, घटाद्यभावप्रत्यक्षं; तथैव इन्द्रियान्तरैः तत्तद्ग्राह्याभावप्रत्यक्षं, संसर्गाभावप्रत्यक्षे प्रतियोगियोग्यतायाः अन्योन्याभावप्रत्यक्षे अधिकरणयोग्यतायाः अपेक्षां च * **आहुः**.

**नैयायिकास्तु** * अनुपलब्धेः पूर्वोक्तां योग्यताम् अनादृत्य योग्यसहकारि-सम्पन्नत्वरूपामेव योग्यताम् * **इच्छन्ति**.

अतएव **(ते!)** * अन्धकारे आलोकाधिकरण-सन्निकर्षात्मक-योग्यसहकार्यभावाद् योग्यानुपलब्ध्यभावेन न घटाभावग्रहः चक्षुषा. जलपरमाणौ च इन्द्रियसन्निकृष्ट-महत्त्ववद्-विशेषणतारूपस्य तस्य अभावात् न पृथिवीत्वाभावग्रहः. भूतले पिशाचात्यन्ताभावस्तु अयोग्यत्वादेव न गृह्यते. अत्यन्ताभावे योग्यतातु योग्यमात्रप्रतियोगिकत्वरूपा योग्यधर्मावच्छिन्न-

प्रतियोगिताकत्वरूपा वा बोध्या. सर्वाभावसाधारणातु न काचिद् योग्यता किन्तु गुणयोग्यतावद् अननुगतैव * इति आहुः.

अत्र स्वसिद्धान्तनिरूपणम् :

**ममतु प्रतिभाति** — अनुपलब्धेः न अभावग्रहं प्रति करणत्वं, ''चक्षुषा अवगतः'' इतिवद् ''अनुपलब्ध्या अवगतः'' इति प्रत्ययाभावाद्, योग्यप्रतियोगिकत्वरूपया अभावनिष्ठयोग्यतयैव निर्वाहात्. अतः तद्योग्यत्वादिविचारो व्यर्थएव. नच *योग्यानुपलब्धेः अकारणत्वे घटवत्यपि भूतले घटाभावग्रहप्रसङ्गः, तस्य घटाक्रान्तत्वेन देशान्तरे इन्द्रियसन्निकृष्टाभावासत्त्वेऽपि तद्विशेषणत्वेन असत्त्वाद् इन्द्रियसन्निकृष्टोद्भूतरूपवद्-विशेषणतारूप-प्रत्यासत्त्यभावादेव तद्वारणात्. अतएव न अन्धकारे, तमोवृतत्वेन भूतलस्य असन्निकृष्टत्वात्. *अनावरकत्वपक्षेऽपि अभावस्य प्रतियोगि तद्व्याप्येतर-प्रतियोगिग्राहक-यावत्सासामग्री-ग्राह्यत्व-नियमेन सामग्र्यभावादेव वारणात्, गृहान्तर्देशस्य असन्निकृष्टत्वेन सन्निकृष्ट-विशेषणतारूप-प्रत्यासत्यभावेऽपि तेजोऽभावस्य तमोरूपमायाबलादेव भानसम्भवात् च. भूतले पिशाचात्यन्ताभावो, जलपरमाणौ पृथिवीत्वाभावश्च, अयोग्यत्वादेव न गृह्यते. स्तम्भे पिशाचभेदस्तु स्वरूपात्मा वा पृथक्त्वात्मा वा इति तद्ग्राहकसामग्र्यैव गृह्यते. नच *द्विष्ठगुणप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात्, न एवम्* इति शंक्यं, पृथक्त्वभिन्नत्वस्य तत्र विशेषणीयत्वात्. अन्यथा तत्प्रतीतिबाधापत्तेः. नच इष्टापत्तिः, अनुभवविरोधात्. नच *भिन्नत्वस्य विशेषणत्वे सिद्धं भेदेन* इति वाच्यं, भेद-प्रतियोगिक-भेदवत् पृथक्त्व-प्रतियोगिक-पृथक्त्वाङ्गीकारेण अतिरेकेऽपि अदोषात्. नच *सन्निकर्षकल्पनम् अप्रामाणिकम्* इति वाच्यम्, अनुभवविरोधाद्, ''इदानीं घटः — प्राच्यां घटः'' इत्यादिप्रतीतिषु विशेषणीभूतयोः कालदिशोः विशेषणतयैव भानदर्शनात्, शास्त्रदीपिकायामपि तथा अंगीकारात्. नच *तयोः संयोगेनैव भानम्* इति वाच्यं, तस्य सदातनत्वेन तयोः सदा भानापत्तेः. नच *अयोग्यत्वात् न दोषः* इति वाच्यं, तस्य विशेषणत्वदशायामपि तुल्यत्वात्. नच *संयुक्तसंयोगेन तमोभानम्* इति वाच्यं [१] संयुक्तसंयोगस्य प्रत्यासत्तित्वं, [२] अनुपलब्धेः करणत्वम्,

[3] अभावस्य असन्निकृष्टस्य भानम्. इति कल्पनात्रयगौरवात्. नच *कल्पनातौल्यम्!* इति वाच्यं, मानान्तरकल्पनायाः अप्रमाणिकत्वात्. प्रत्यक्षसूत्रीय-'सत्संप्रयोग' ( जेमि.सू. १।१।४ )-पदे कर्मधारयाश्रयणेऽपि अविरोधात्. 'सन्निकर्षो'निरुक्त्या करणत्वस्य अशक्यवचनत्वाद्, असन्निकृष्टस्य मानान्तरेण उपलम्भांगीकारे विप्रकृष्टदेशिकाभावग्रहापत्तेः च.

*अथ योग्यताज्ञापके तर्के अधिकरणप्रत्यक्षस्यापि सहकारित्वात् न दोषः* इति चेत्, न, अभावज्ञानस्य अनुपलब्ध्यधीनत्वेन, अनुपलब्धि-योग्यता-ज्ञानस्य उक्ततर्काधीनत्वेन, तर्कस्यच अभावसंसृष्टाधिकरण-प्रत्यक्षाधीनत्वेन अभावज्ञानाधीनत्वात् च चक्रकापत्तेश्च. नच *योग्यतायाः अज्ञातायाएव उपयोगः* इति वाच्यं, तर्कोपन्यासवैयर्थ्यापत्तेः. तज्ज्ञानार्थमेव तदुपन्यासाद्, अन्धकारेऽपि तद्ग्रहापत्तेः च. नच *तत्र योग्यता नास्त्येव* इति वाच्यं, हस्तेन तज्ज्ञानात्. अतो ''हस्ताभ्यां घटाभावं जानामि — चक्षुषातु न पश्यामि'' इति अनुव्यवसायाद् ऐन्द्रियकमेव घटाभावज्ञानम्. नच *इन्द्रियाणाम् अधिकरणज्ञानाद्युपक्षीणत्वं शंक्यम्, अधिकरणज्ञानोत्तरं नेत्रनिमीलनेऽपि योग्यानुपलब्ध्या घटाभावग्रहापत्तेः. नच *फलीभूतज्ञानस्य प्रत्यक्षत्वानुरोधेन तत्कारणस्य प्रत्यक्षत्वं न युक्तिसहं, ''दशमः त्वम् असि'' इत्यादि-वाक्यजन्य-प्रत्यक्षस्थले व्यभिचाराद्* इति वाच्यं, तदसंगतत्वस्य शब्दपरिच्छेदएव उपपादितत्वात्. वृत्तिवैजात्यस्य प्रमाणवैजात्योपपादकत्वे, फलवैजात्यस्य तदनियतत्वाद् आकस्मिकत्वापत्तेः. वृत्तिनियतत्वांगीकारेण समर्थनेतु फलस्य वृत्तिनियतत्वेन, वृतेश्च प्रमाणनियतत्वेन, फलाद् वृत्तित्वद्वारा प्रमाणनिर्णयस्य अनपनोद्यत्वात्. उक्तवाक्याद् ''दशमो अहम्'' इति प्रत्यक्षोत्तरम् ''आत्मानं दशमं पश्यामि'' इति 'जानामि' इति शब्दात्, 'प्रत्येमि' इति वा विशेषवृत्त्युदये, यत्नं विनापि प्रमाणनिर्णयात्. शब्दे चक्षुरादिसहकारित्वस्य परोक्षवृत्तिजनकत्वस्य च निश्चयेन, शब्दात् प्रत्यक्षस्य सर्वथा अनुपपन्नत्वात् च. अतो वृत्त्यनुरोधेनापि कारणम् इन्द्रियमेव. यत् पुनः मध्याह्ने प्रतियोग्यस्मरणात् प्रातःकालीन-माथुराभाव-ज्ञानं शास्त्रदीपिकायाम् उक्तं, तदपि न युक्तिसहं, प्रातः प्रतियोगिनो बुद्ध्यनारूढत्वेन स्मरणाभावस्य ध्वंसरूपतायाः अशक्यवचनत्वात्. प्रागभावा-

त्यन्ताभावरूपत्वे प्रश्नात् प्रागपि तत्सत्त्वेन तदापि तदभावज्ञानप्रसंगाद्, भेदरूपत्वेऽपि तथात्वात् च. अभावत्वेन संसर्गाभावत्वादिना च तत्कारणतायाः दुर्घटत्वात् सहकार्यन्तरापेक्षयाम् उक्तदोषप्रसंगात् च. अतः प्रश्नेन प्रातःकालीनसंसर्गशाब्दे जाते तस्य बुद्धौ आरोहे विरोधसंसर्गेण अभावज्ञानं मानसं, मायाद्वारकं वा मानसम्-इति, न तेन स्मरणाभावस्य कारणत्वसिद्धिः. एतेनैव सहकारित्वमपि दत्तोत्तरम्. तस्माद् अभावज्ञानम् अभावयोग्यतया साधितम् ऐन्द्रियकमेव इति निश्चयः. इति अभाववादः.

सांख्यमतानुसारेण वृत्तिसामान्यस्वरूपनिरूपणं तत्र मायावादि-नैयायिकयोः च विप्रतिपत्तेः विमर्शः :

प्रकृतम् अनुसरामः : उक्तसन्निकर्षजन्यमपि सविकल्पकं ज्ञानं चाक्षुपादिभेदेन बुद्धिवृत्त्या जन्यतइति वृत्तिः विचार्यते.

-------

तत्र, नेत्रनिमीलने कृते बहिर्दृष्टपदार्थस्येव कश्चिद् आकारो नेत्रान्तर् भासते. स आकारो न बाह्यवस्तुनः, आश्रयम् अतिहाय तत्र तस्य अशक्यवचनत्वात्. अतः स आन्तरस्यैव कस्यचन भवितुम् अर्हतीति तदाश्रयत्वेन सांख्यैः आहंकारिकं तत्त्वान्तरं 'वृत्ति' नामकं कल्प्यते.

यथाहि प्रवचनसूत्रद्वयं :—

"प्रमार्थप्रकाशलिंगाद् वृत्तिसिद्धिः" (सां.प्र.सू.५।१०६) "भागगुणाभ्यां तत्वान्तरं वृत्तिः..." (सां.प्र.सू.५।१०७) इति. अर्थस्तु : 'प्रमा' पूर्वोक्तरीतिकम्-आकारज्ञानं, तत्सहितो यो 'अर्थप्रकाशो' विषयज्ञानं, एवम् उभयविधाद् 'लिंगाद्' ('वृत्तिसिद्धिः') वृत्तिसत्तानिश्चयः. यदि वृत्तिः न स्याद् उक्तः आकारो न प्रतीयेत अतैजसत्वाद्, अचलं चक्षुः विप्रकृष्टं विषयम् अप्राप्नुवत् तत्प्रकाशनं न कुर्यात्, जायतेच तद् उभयम् अतः सा अस्ति इति निश्चयः. एवं 'भागो' विभागो अहंकाराद् विभज्य

विषयदेशावधिगमनं, 'गुणः' उक्ताकारः, 'ताभ्यां' कृत्वा आहंकारिकं "तत्त्वान्तरं वृत्तिः" इति. अभियुक्तोक्तिश्च "वृत्तयः प्रसादरूपा स्फारिताक्षस्य यत्र च अदृष्टानुग्रहात ततत्-(तत्र)सम्बन्धार्थावबोधिका" (          ).

(द्रष्ट. : सां.प्र.वृ.सार.५।१०७) इति.

अमूर्तायाः तस्याः कथं क्रिया इत्यतः तृतीयं सूत्रं :—

"न द्रव्यनियमः तद्योगाद्" (सां.प्र.सू.५।१०८) इति. अनियतत्वात् पदार्थानां 'न द्रव्य'एव क्रिया 'नियमः' किन्तु यत्र यत् प्रमाणतः सिध्यति तत्र तद् अनुमन्यामहे; अतो, दूरस्थवस्तुनः आकारग्रहणदर्शनात् सापि क्रियावती इति अर्थः.

इति (तत्रैव).

एवं **मायावादिनोऽपि** * अन्तःकरणविशिष्टस्य चैतन्यस्य प्रमातृत्वम् अंगीकृत्य तस्मिन् ज्ञानसूक्ष्मावस्थारूपं विषयसंस्कारम् आधातुं विषयेन्द्रिय-सन्निकर्ष-सामर्थ्य-जन्याम् अन्तःकरणपरिणामरूपां वृत्तिम् * **अंगीकुर्वन्ति.**

**नैयायिकादयस्तु** * नयनकिरणानां निर्गमनेन विषयसन्निकर्षाद् ज्ञानम्. तेनच भावनासंस्काराख्यं गुणान्तरं चरमस्मृतिनाश्यम् आत्मनि अंगीकुर्वन्तो वृत्तिपदार्थमेव न * **इच्छन्ति.**

**अथ उक्तपक्षयोः आलोचनपूर्वकं स्वमतनिरूपणं च :**

तत्तु नेत्रान्तरनुभवस्य सार्वजनीनत्वाद् अप्रयोजकमिति वृत्तिः सर्वथा अभ्युपेयैव परन्तु या बुद्धिवृत्तिः "संस्काराधानाद्यर्थं जन्यते" इति उच्यते, सा वृत्तिः बुद्धेः न तत्त्वान्तरं नापि अन्तःकरणपरिणामान्तरं किन्तु बुद्धितत्त्वस्य कालक्षुब्धसत्त्वादिगुणकृतो अवस्थाविशेषएव. नच * तस्य अवस्थाविशेषत्वे निर्गमाभावेन विषयासंसर्गात् तदाकारकत्वं वृत्तेः दुर्घटम् * इति शंक्यं, मायागुणस्य

रजसः चञ्चलत्वेन विक्षेपकत्वेन च दर्पणे मुखस्येव नेत्रगोलकेऽपि बाह्यविषयाकारसमर्पणे तदाकारकत्वस्य सुघटत्वात्. सएव मायिकः आकारो नयनकिरणेषु नेत्रमुद्रणे प्रत्यावृत्तेषु गोलकान्तर् अनुभूयते. एवमेव इन्द्रियान्तरेऽपि वृत्तिः ज्ञातव्या. यद्यपि सा न अनुभूयते तथापि तादृशसंस्काराधानात् निश्चीयते. "एकादशा आसन् मनसोहि वृत्तयः आकूतयः पञ्च धियो अभिमानः मात्राणि कर्माणि पुरं च तासां वदन्ति हैकादश वीरभूमिः" ( भाग.पुरा.५।११।९ ) इति जडभरतवाक्यात् च. भूमिषु पञ्चानां ज्ञेयत्वेन विषयत्वं ततः पञ्चानां कार्यत्वेन. पुरस्य स्वकार्यत्वेन ज्ञेयम्. संस्कारस्तु "जातस्य ज्ञानस्य सूक्ष्मावस्था" इति उक्तम्. बुद्धिश्च कर्मज्ञानेन्द्रियानुग्राहिका इति वक्ष्यते. साच वृत्तिद्वारैव अनुगृह्णातीति इन्द्रियजन्यस्य विशिष्टज्ञानस्य नानाभेदाः अतो अवस्थयैव निर्वाहे सांख्याभिमतस्य अन्तःकरणातिरिक्त-पदार्थान्तरत्वस्य निष्प्रमाणकत्वात्. "कामः संकल्पः" ( बृह.उप.१।५।३ ) इति श्रुतौ 'कामा' दि पदानि शक्तानि 'धी' पदं लाक्षणिकम्" इति मायावादिकल्पनायाअपि वैरूप्यादिदोष-ग्रस्तत्वात् च तद् उभयमपि असंगतम्.

अतो बुद्धेः अवस्थाविशेषएव वृत्तिः इति निश्चयः.

*ननु इन्द्रियार्थसम्प्रयोगोत्तरं सम्प्रयुक्तार्थाकारसमानो बुद्धौ आकारो जायतइति प्रमा भवतु, भ्रमादिकन्तु न भविष्यति शुक्त्यादौ तद्विरुद्धस्य रजताद्याकारस्य अभावेन बुद्धौ मायाकृततत्समर्पणायोगाद् अन्यथाख्यातिप्रभृतीनां च अनङ्गीकाराद्* इति चेत्, न, स्वभावगुणानुग्रहादेव तस्यापि सिद्धेः, पूर्वोत्पन्नस्य रजताद्याकारकसंस्कारस्य रजसा बहिःक्षेपे, सम्प्रयुक्तार्थाकारस्य तमसा आवरणे च, भ्रमस्य सुखेन वक्तुं शक्यत्वात्. एवं नानाविधाद् गुणक्षोभज-वृत्ति-भेदादेव अन्येऽपि ज्ञानभेदाः उन्नेयाः.

<u>जाग्रदवस्थायां षड्विधेन्द्रियसन्निकर्षमात्रजन्यं ज्ञानं निर्विकल्पकं तदेव संशयादिबुद्धिवृत्त्यनुगृहीतं सत् सविकल्पकं ज्ञानं भवति इति निरूपणम्</u> :

यदा विषयेन्द्रियसंयोगात् निर्विकल्पकं तदा इन्द्रियदेशे बुद्धेः वृत्तिः.

तया इन्द्रियानुग्रहे सविकल्पकम्, अननुग्रहेतु न. वृत्त्यन्तरेण पूर्ववृत्तेः नाशे सविकल्पकस्य संस्काररूपेण अवस्थानं, तस्य उद्बोधकैः उद्बोधे मायोपस्थापित-मायिकार्थ-सहकृता स्मृतिः, राजसैः रागादिभिः संस्कारप्राबल्ये मायया विषयाकारावरणपूर्वकं मायिकपदार्थ-सहितस्य ज्ञानस्य गोलकाग्रभागे क्षेपे भ्रमः, किञ्चिदावरणे संशयः, सत्त्वेन सर्वथावरणभंगे विक्षेपस्यापि निवृत्तौ विशेषदर्शनम् इत्यादि.

वृत्तिविषयातु वृत्तिः न भवतीति अनुभवानुसारेणैव निश्चीयते. नच *वृतीनां गुणजन्यत्वे मानाभावः* शंक्यो, "जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः" (भाग.पुरा.११।१३।२७) इति एकादशे हंसवाक्यात्, संशयादिवृत्तीनां तदवान्तरभेदत्वेन तदनतिरेकात्.

यत्तु "जाग्रद्भोगप्रद-कर्मोद्बोधे जागरणं, तदुपरमे निद्रया स्वप्नसुषुप्ती" इति मतं, तत्रापि कर्मोद्बोधोपरमहेतोः अवश्यवाच्यत्वेन लाघवाद् ईश्वरेच्छानुगृहीतानां परस्परोपमर्दकादिस्वभावानां गुणानामेव अवस्थाहेतुत्वं साधीयः.

तस्माद् बुद्धिगुणजन्या तदवस्था वृत्तिः. सा यदा अनुगृह्णाति तदा वक्ष्यमाणप्रक्रियया सविकल्पकं ज्ञानं जन्यते.

तथाहि :—

"अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्॥
शरीरं वाङ्मनोभिर्यत् कर्म प्रारभते नरः।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः॥"

(भग.गीता.१८।१४-१५)

इति गीतायां कार्यमात्रं प्रति पञ्च हेतवः उक्ताः. तत्र : 'अधिष्ठानं'=शरीरं, 'कर्ता'=जीवः, 'करणं'=बा-

ह्याभ्यन्तरं. 'चेष्टा'=प्राणादिवायुकर्माणि, 'दैवं'=काल-कर्म-भगवदिच्छादिः.

"ईश्वरः सर्वभूतानां हृद्देशे, अर्जुन!, तिष्ठति भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" (भग.गीता.१८।६१) इति वाक्याद् अन्तर्यामी वा 'दैव'पदवाच्यो "देवानां समूहो दैवम्" इति तत्तदिन्द्रियाधिष्ठातारो वा. एवं सति ज्ञानजनक-मनःसंयोगादि-हेतुभूत-क्रियायामपि एतान्येव कारणानि.

तत्र अयं क्रमो : दैवानुकूल्येन अन्तर्यामिणा मनः तत्तत्कार्यार्थं प्रेर्यते, तत् च इन्द्रियप्रेरणाय तत्तदिन्द्रियेण संसृज्यते. तत्र तत्तदिन्द्रियदेवतानुकूल्ये विषयसंसृष्टैः इन्द्रियैः स्वावच्छिन्ने मनसि पूर्वं निर्विकल्पकम् उत्पाद्यते. तदा इन्द्रियदेशे बुद्धेः वृत्तिः. ततो बुद्ध्यापि वृत्तिद्वारा तदनुग्रहे सविकल्पकं भवति.

चाक्षुषेतु नयनकिरणाः विषयपर्यन्तं गच्छन्ति, इन्द्रियान्तरेतु किरणाभावाद् इन्द्रियेण सह विषयं मनः प्राप्नोति तदा, क्रमेण सहैव वा, निर्विकल्पकं सविकल्पकं च तत्तदिन्द्रियसंसृष्टे मनसि उत्पद्यते. ज्ञानद्वयेऽपि विषयेन्द्रियस्पर्शादिकं व्यापारः.

नच *नयनानां किरणाङ्गीकारे चक्षुषो व्यापकत्वापत्त्या "अणवश्च" (ब्र.सू.२।४।७) इति सूत्रविरोधः* शंकनीयः, अर्चीरूपाणां किरणानां सूर्यमण्डलाद् भेदस्य "आदित्यो वा एषः" (महाना.उप.१२।२) इति अनुवाके श्रावणात्. तैः अखिलमेरूत्तरदेशान् व्याप्नुवानस्य आदित्यमण्डलस्य दश-सहस्र-योजन-परिमाण-स्मरणेन तेषां तत्परिमाणाबाधकत्ववत् सूर्याध्यात्मिक-चक्षुषः किरणानामपि तथात्वेन सूत्राविरोधात्. यद्वा "तथा प्राणः"(ब्र.सू.२।४।१) इत्यत्र प्राणेषु जीवातिदेशस्य सिद्धान्ते अंगीकारात् सर्वशरीरे जीवस्येव सामर्थ्याद् वा गुणाद् वा व्याप्तिवत् तेषामपि देवतासामर्थ्याद् वा गुणाद् वा व्याप्त्यंगीकारस्य वक्तव्यत्वात् "गुणाद्वा आलोकवद्" (ब्र.सू.२।३।२५) इति सूत्रे आलोकस्य

गुणत्वांगीकारात् तैजसस्य चक्षुषः आलोक-रूप-गुण-व्याप्त्यंगीकारेऽपि अदोषः. एवमपि सूत्राविरोधः चाक्षुष-रूप-कार्य-सिद्धयोः सम्भवात्. अतएव त्वचः सकल-शरीर-व्यापित्वमपि देवता-सामर्थ्य-स्पर्श-गुणाभ्यां युज्यते. अन्यथातु सूत्रविरोध-सार्वत्रिक-स्पर्शानुभव-बाधयोः अन्यतरद् आपद्येतेव. तस्मात् नयन-किरण-गमन-द्वारिकैव प्रत्यक्षप्रक्रिया साधीयसी.

या पुनः *आलोकेन मायाकार्य-तमो-जनन-प्रतिबन्धे कृते, ज्योती-रूप-सूर्य-देवतया अण्वात्मकचक्षुषि सन्मुखाव्यवहित-देशस्थ-पृथुबुध्नोदराकारे विशिष्टरूपे प्रापिते सत्त्वप्रधानबुद्धेः अन्तरेव तदाकारतासम्पत्तौ अणुरूपं जीवं प्रति ज्ञानाश्रिताध्यात्मिक-घटाभिव्यक्तिरेव चाक्षुषं. दूरस्थगन्धशब्दयोस्तु वायुना घ्राण-श्रोत्र-समीप-प्रापणे अन्तःसत्त्वात्मकबुद्धेः तदाकारतासम्पत्तौ ज्ञानाश्रिताध्यात्मिक-गन्धशब्दाभिव्यक्तिरेव घ्राणजं श्रावणं च, प्रत्यक्षमिति आध्यात्मिकाधिभौतिकयोः अभेदात् न बाह्यघटाग्रहणनिबन्धनो दोषः* इति **केषाञ्चित्** प्रत्यक्षप्रक्रिया.

तत्र आलोकेन तमोजनन-प्रतिबन्ध-कथनम् अयुक्तं, "यथाहि भानोः उदयो नृचक्षुषां तमो निहन्याद्" ( भाग.पुरा. ११।२८।३४ ) इति एकादशस्कन्धीय-भगवद्-वाक्ये तमोनिहन्तृत्वकथनात्. एवं ज्योतीरूप-सूर्यदेवतायाः पुरुषचक्षुषि विषयनिष्ठ-रूपप्रापकत्व-कथनमपि तथा, बहुषु पश्यत्सु तान्-तान् प्रति रूपे प्रापिते विषयस्य नीरूपताप्रसंगेन पाश्चात्यानां तददर्शनप्रसंगात्, तद्दर्शनार्थं तस्मिन् विषये पुना रूपान्तरोत्पादनानयनादिरूपाप्रामाणिक-कल्पना-प्रसंगात् च, सन्ध्यायाम् अस्तंगते सूर्य रूपप्रापकदेवतायाः गतत्वात् तदानीं घटाद्यदर्शनापत्तेश्च.

नच *"निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद् दर्शयति च" ( ब्र.सू.४।२।१९ ) इति सूत्रे "अथ या एता हृदयस्य नाड्यः" ( छान्दो.उप.८।६।१ ) इति नाडीः उपक्रम्य "अमुष्माद् आदित्यात् प्रतीयन्ते ता आसु नाडीषु सुप्ता आभ्यो नाडीभ्यो प्रतीयन्ते ते अमुष्मिन् आदित्ये सुप्ता" ( छान्दो.उप.८।६।२ ) इति

दहरविद्यास्थश्रुत्या रात्रावपि आदित्यरश्मिसम्बन्धस्य उक्तत्वात् तदानीं सन्ध्यायाञ्च नाडीसृप्तरश्मिभिः विषयरूपप्रापणात् न घटाद्यदर्शनप्रसंगः * इति वाच्यं. नाडीसृप्तरश्मिनां हृदयाग्रप्रद्योतन-जीवोत्क्रमण-मात्र-कार्यार्थतायाएव श्रावणेन तद्रश्मीनां रूपप्रापकतायाः वक्तुम् अशक्यत्वात्. तदानीमपि रूपप्रापकत्वाङ्गीकारे तदानीं नश्यत्वाद् अस्तमिते आदित्ये "किञ्ज्योतिः अयं पुरुषः" ( बृह.उप.४।३।२ ) इत्यादिज्योतिर्ब्राह्मणविरोधस्य प्रत्यक्षविरोधस्य च दुष्परिहरत्वात्. अतो "नेतृत्वं द्रव्यशब्दयोः"( भाग.पुरा.३।२६।३७ )इतिवद् आदित्यादिरश्मीनां रूपप्रापकत्वस्य अशब्दगोचरत्वात् सूर्यरूपदेवतायाः रूपप्रापकत्वाङ्गीकारः सर्वथा न युक्तः.

किञ्च चक्षुषि रूपप्राप्तिश्च प्रतिबिम्बभवनरूपैव, सातु मायया "ऋतेऽर्थं यत् प्रतीयेत" ( भाग.पुरा..२।९।३३ ) इति वाक्यात् , तस्याः विक्षेपकत्वात् च.

एवञ्च बुद्ध्याकारसमर्पकत्वमपि प्रतिबिम्बस्यैव. आध्यात्मिकरूपमपि मायामयं मनोमयत्वात्. तस्यच न सत्यता — अर्थक्रियाकारित्वमात्रम्. परम् आधिदैविकन्तु शब्दैकनिष्ठं भगवदात्मकं तत् सत्यमेव. आधिभौतिकन्तु प्रपञ्चात्मकम्. तस्यतु कार्यरूपत्वेऽपि कारणरूपेणैव सत्यत्वं, नतु स्वेन रूपेण, विकाराणां वाचारब्धत्वात् सदसद्ग्रन्थिरूपत्वात् च; तदेव च लौकिकव्यवहारविषयः.

सविकल्पकज्ञानजन्य-हानोपादानोपेक्षाबुद्धिस्वरूपाणि :

तत्र सविकल्पकं प्रमेयानन्त्याद् अनन्तविधं भवति. तत्रापि कारणान्तरसमवधानेन संशय-विपर्यास-निश्चय-स्मृति-भेदाः जाग्रति भवन्ति, यथासम्भवं स्वप्नेऽपि ते.

सविकल्पक-जन्य-हानोपादान-बुद्धौतु विशेषः :

"इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः चेतनां हरते बुद्धेः स्तम्बस्तोयमिव हृदाद्"

( भाग.पुरा.४।२२।३० )इति वाक्याद् विषयैः इन्द्रियाकर्षः. ततः तैः मनसः, तच्च अशुद्धमिति तत्र कामोत्पत्तौ उपादानबुद्धिः. तादृशे मनसि द्वेषोत्पत्तौ तु हानबुद्धिः. नच इदम् अप्रयोजकं कामिनी कुचकुम्भदर्शनादौ चक्षुषः, शीतादिकालेषु उष्मादिना त्वचो, रागादियुक्तगीतेन श्रवणस्य, चन्दनादिगन्धेन घ्राणस्य, भक्षितस्यापि दध्यादेः पुनः आस्वादनेन रसनस्य, तैश्च मनसः आकर्षस्य अनुभवसिद्धत्वात्.

मनसश्च रूपद्वयं : बाह्यम् आन्तरं च इति तृतीयस्कन्धे तत्त्वस्तुतौ "पराहतान्तर्मनसः" ( भाग.पुरा.३।५।४४ ) इत्यस्य सुबोधिन्यां स्थितम्. तत्र आन्तरं येन विषयेण इन्द्रियद्वारा कृष्यते तद्विषयिणी हानोपादानबुद्धिः भवति, येनतु न आकृष्यते तद्विषयिणी उपेक्षाबुद्धिरिति युगपत् नानाबुद्धिसत्त्वम्. नच *तत्र वेगाद् यौगपद्याभिमानएव* इति वाच्यम् ऐकाग्र्यदशायां पुस्तकदर्शने युगपत् नानाक्षरापेक्षाज्ञानस्थले वेगांगीकारस्य अनुभवविरुद्धत्वाद्. अतो रूपद्वयमेव युक्तम् इति. यदा मनसो अनाकर्षः तदा उपेक्षाबुद्धिः. अतएव तस्याः न स्थिरत्वम्, अभ्यासाद्यभावात्.

**स्वसिद्धान्ताभिमतसविकल्पकज्ञानजननप्रणाडी :**

इदञ्च सर्वं ज्ञानम्, अन्तःकरणाद्यध्यासाद्, जीवात्मा स्वस्मिन् अभिमन्यतइति अस्य ज्ञानस्य लौकिकानाम् आत्मधर्मत्वप्रवादः इति. अन्तःकरणाध्यासस्तु, हृदयदेशे जीवस्य अन्तःकरणानां च स्थितत्वात्, तेषु तत्प्रतिबिम्बः; तस्य प्रतिबिम्बस्य इन्द्रियेषु प्रतिबिम्बान्तरे इन्द्रियाध्यासः, तस्य देहे प्रतिबिम्बे देहाध्यासश्च भवति. प्रतिबिम्बश्च तत्प्रकाशस्य तेषु संक्रमेण भवति सूर्यस्येव, नतु मुखस्येव सन्निधिमात्रेण, इति निर्णीतं "यथा जलस्थ आभास"( भाग.पुरा.३।२७।१२ ) इत्यत्र तृतीयस्य सप्तविंशे अध्याये.

**स्वप्नात्मिकायाः बुद्धिवृत्तेः स्वरूपम् :**

एवञ्च पूर्वकृतस्य प्रारब्धकर्मणः पक्वस्य जाग्रति फलभोगो भोगे क्रियमाणे आहारश्रमादिभिः यदा निद्रा भवति, तदा 'स्वापः' - स्वप्नवृत्तिः.

तत्र अयं हृदयदेशात् निःसृत्य 'हिता'भिधानासु शुक्ल-नील-हरित-लोहित-पीत-रसभृतासु केशसहस्रभागवद् अण्वीषु नाडीषु द्वासप्तति-सहस्र-संख्याकासु तस्यान्तस्याञ्चिद् ईश्वरेच्छादिवशेन अन्तर्बहिःकरणानि आदाय परिवर्तते, तदा चैतन्यसंकोचनेन बहिरिन्द्रियेषु मनसि च प्रकाशासंक्रमात् प्रतिबिम्बो न भवति, बुद्ध्यहंकारयोरेवतु भवति. तदा बुद्धिसहितो अहंकाराध्यासेन स्वाप्नं सुखदुःखादि भुङ्क्ते. तत्र प्रकाशो भगवतो, विषयश्च मायिको, भोगे बुद्धिः करणं, भोगश्च अहंकारे. यदा पुनः निद्रायां तमसः उद्रेकः ईश्वरेच्छादिवशात्, तदा अयं तैः सर्वैः सह पुरीतति प्रविशति. पुण्डरीकाकारो मांसपिण्डो हृदयं, तद्वेष्टिताः नाड्यः 'पुरीतत्'—शब्देन उच्यन्ते. तदा सुषुप्तिः. कदाचिद् भगवदिच्छया तस्य हृदयस्य अन्तर्, यः 'आकाश' शब्दवाच्यः परमात्मा, तत्र सम्पद्य शेते. द्विविधायामपि सुषुप्तौ कर्मासंसर्गाद् दुःखाभावः. द्वितीयस्यां परमानन्दः इति विशेषः. ततः पुनः भगवदिच्छादिवशेन परमात्मनः सकाशात् सर्वेषां प्राणादीनाम् आत्मान्तानां व्युच्चरणं ततो जागरणे स्वस्थानस्थितिः पूर्वोक्तरीत्या तत्तदनुभवादिः च इति.

सविकल्पकज्ञानजनने नैयायिकाभिमत-संयोगसम्बन्ध-घटित-प्रणाडी-विमर्शः :

**नैयायिकास्तु** *"आत्मा मनसा संयुज्यते, मनः इन्द्रियेण, इन्द्रियम् अर्थेन, इतिक्रमेण आत्मन्येव ज्ञानम् उत्पद्यते" इति आत्मधर्मत्वं जन्यज्ञानस्य* **आहुः.**

तत्तु श्रुतिविरोधादेव अपास्तं, विभोः निरवयवस्य आत्मनः संयोगं प्रति कर्तृत्वायोगात् च. नच *अन्यतरकर्मजएव संयोगः तत्र अस्तु* इति वाच्यं, मनसएव कर्तृत्वापातात्, तस्यैव क्रियाश्रयत्वाद्, जीवे गुणाधीनत्वेन कर्तृत्वायोगाद् इति.

उक्तविषये मायावादाभिमत-प्रतिबिम्ब-प्रणाडी-विमर्शः :

**मायावादिनस्तु** *ब्रह्मात्मकम् एकमेव ज्ञानं स्वीकृत्य बुद्धौ तस्य प्रतिबिम्बं, तस्यैव व्यावहारिकज्ञानत्वं च अंगीकृत्य, चिदुपरागावरणभंगाभेदाभिव्यक्तिपक्षान् जीवस्य किञ्चिज्ज्ञत्वाय* **आहुः.**

तदपि असंगतं, प्रतिबिम्बस्य वक्तुम् अशक्यत्वात्. ब्रह्मणो नीरूपत्वात्. बुद्धेश्च अस्वच्छत्वात्. दर्पणवत् किञ्चिद्देशावच्छिन्नस्वच्छत्वम् अंगीकृत्य आकाशस्येव ब्रह्मणः प्रतिबिम्बांगीकारेऽपि ब्रह्मणः सच्चिदानन्दरूपत्वेन सदानन्दयोरपि प्रतिबिम्बापातात्. नच इष्टापत्तिः, ज्ञानवत् तयोरपि भानापत्तेः, सर्वदा सर्वेषाम् अन्तःशरीरस्थ-सर्वज्ञानापत्तेः च; प्रतिबिम्बाधारत्वयोग्यायां बुद्धौ ज्ञानस्येव आन्तराणां नाड्यादीनां सन्निहितत्वेन तत्प्रतिबिम्बेऽपि बाधकाभावात्. किञ्च अविद्यायां ब्रह्मप्रतिबिम्बभूतानां जीवानां व्यापकतया स्वतः सर्वपदार्थसंसृष्टत्वाद् बाधकाभावेन अविद्यायामपि सर्वप्रतिबिम्बसम्भवेन तत्तत्संसर्गं द्विगुणीकृत्य जाते सर्वतादात्म्यापन्नस्य ब्रह्मणइव तेषामपि सर्वसंसृष्टत्वात् साक्षित्वात् च वृत्तिं विनैव स्वरूपचैतन्येन सर्वावभासकतायाः शक्यवचनत्वेन ब्रह्मवत् सर्वेषां सर्वज्ञता स्यात्. नच *अन्तःकरणभेदेन प्रमातृभेदात् तदनापत्तिः, व्यापकत्वेन सर्वेषां सर्वान्तःकरणसंसृष्टतया प्रमातृभेदस्यापि अकिञ्चित्करत्वात्. संसर्गतौल्ये एकस्यैव एकान्तःकरणवैशिष्ट्यं न अपरस्य इत्यत्र हेत्वभावात्. अदृष्टादीनां हेतुताकल्पनस्यापि अनेनैव न्यायेन निरसितुं शक्यत्वात्.

*ननु दूषणग्रासात् मा अस्तु व्यापकानेकजीववादः किन्तु व्यापकैकजीववादो अस्तु. तथाच तस्य सर्वज्ञतायाम इष्टापत्तिः* इति चेत्, सत्यम् इष्टापत्तिः स्याद् यदि एकत्रैव सर्वज्ञता स्यात् नच एवम्, अविशेषण एकस्यैव सर्वशरीराधिष्ठाने सर्वत्र अविद्योपहितस्य साक्षिणः एकत्वात् सर्वत्र उपाधौ सर्वप्रतिबिम्बेषु संसृष्टत्वात् च, ब्रह्मणइव जीवस्यापि सर्वेषु प्रतिबिम्बेषु सर्वज्ञतायां बाधकाभावात्. नच *ब्रह्मापि एकत्रैव सर्वज्ञं न सर्वत्र* इति वाच्यं, ब्रह्मविष्णुशिवादि-शरीरावच्छेदेन सर्वज्ञताप्रतिपादक-शास्त्रविरोधापातात्. नच *अविद्योपाधौ सर्वप्रतिबिम्बेऽपि अन्तःकरणभेदेन प्रमातृभेदात् तन्निकटस्थस्यैव ज्ञानं प्रमातुः भविष्यतीति न सर्वत्र सार्वज्ञ्यापत्तिः* इति वाच्यं, प्रमात्रभेदे करणभेदस्येव साक्ष्यभेदे प्रमातृभेदस्यापि अप्रयोजकत्वात्, सर्वत्र साक्षिणएव भासकत्वात्. नच *तस्य अविद्योपहितरूपेण न साक्षित्वं किन्तु अन्तःकरणोपहितरूपेण, तथाच रूपभेदेन साक्षिभेदात् न सार्वज्ञ्यापत्तिः*

इति वाच्यम्, अप्रयोजकत्वात्. तथासत्यपि हृदयनाडीप्रभृतीनाम् आन्तराणां अन्तःकरणे प्रतिबिम्बितानां ज्ञानन्तु अस्य निर्बाधमिति आन्तरसर्वज्ञतायाः दुर्वारत्वात्. *ननु सर्वेषां प्रतिबिम्बो न अस्माभिः अंगीक्रियते* इति चेत्, मा एवं, यद् अयं न स्वीक्रियते, कः तत्र हेतुः? न तावद् असन्निधिः, अविद्यायाः व्यापकत्वात्. नापि बिम्बालोकसंयोगाभावः, सूर्यादेः विद्यमानत्वाद्, अन्तःकरणस्थलेऽपि अन्तःकरणस्य अन्तःसन्निहितत्वाद्, अन्तर्गृहगतदर्पणप्रतिबिम्बित-सूर्यप्रकाशेन आन्तरवस्तूनां प्रतिबिम्बदर्शनाद्, इहापि जीवचैतन्य-प्रकाशितान्तःकरण-संसृष्टे आन्तरबिम्बे आलोकान्तर-संयोगानपेक्षणात्. जीवचैतन्येन आन्तरप्रकाशानंगीकारे साक्षात् संसृष्टान्तःकरण-तद्धर्मादीनामपि अनवभासप्रसंगात्. मतेच तदवभासे तद्वदेव तत्संसृष्टानामपि अवभासाद् अहंकारादिवद् हृदयनाडीप्रभृतीन्यपि अनुसन्धीयेरन्, संस्काराधाय-कस्य अवभासस्य तुल्यत्वात्. अथ एकप्रतिबिम्बावरुद्धे दर्पणादौ अन्यस्य प्रतिबिम्बादर्शनाद् व्यापकजीवावरुद्धे अविद्यादौ इतरेषां प्रतिबिम्बो न भविष्यतीति अवरोधएव प्रतिबिम्बाभावे हेतुः इति विभाव्यते, तदपि असंगतम् एकप्रतिबिम्बावरुद्धे अन्यप्रतिबिम्बः तदा न भवति यदा बिम्बान्तरं पूर्वबिम्बव्यवधेयं भवति इहतु ब्रह्मणो व्यापकत्वेन परिच्छिन्नानां सर्वेषां ब्रह्मान्तर्वर्तित्वेन तद्व्यवधेयत्वाभावात् न जीवेन तत्प्रतिबिम्बावरोधइति दुर्वारएव सर्वेषां प्रतिबिम्बः इति. *ननु भवतु सर्वेषां प्रतिबिम्बः तथापि न जीवस्य सर्वज्ञतापत्तिः भवित्री, जीवसाक्षिवादस्य अनङ्गीकारात्. तथा सति कूटस्थचैतन्यं वा जीवाभिन्नं सर्वप्रत्यग्भूतं शुद्धं ब्रह्मैव वा परमेश्वरस्यैव रूपान्तरं वा साक्षी भविष्यति तस्यतु सर्वज्ञत्वेऽपि अदोषः. जीवस्तु, यथा सर्वगतं गोत्वसामान्यं स्वभावाद् अश्वादिसंगित्वाभावेऽपि सास्नादिमद्व्यक्तौ संसृज्यते, तथा विषयादौ सन्नपि जीवस्वभावाद् अन्तःकरणएव संसृज्यते. यदाच अन्तःकरणपरिणामो वृत्तिरूपो नयनद्वारेण निर्गत्य चक्षूरश्मिवद् झटिति दीर्घप्रभाकारेण परिणम्य विषयं प्राप्नोति, तदा तम् उपारुह्य जीवः तं विषयं गोचरयति. केवलाग्न्यदाह्यस्य तृणादेः अयःपिण्ड-समारूढाग्नि-दाह्यत्ववत् केवलजीवचैतन्याप्रकाश्यस्यापि घटादेः अन्तःकरण-वृत्त्युपारूढ-तत्प्रकाश्यत्वं युक्तमिति चिदुपरागार्थत्वेन वृत्तिनिर्गमम् अपेक्ष्य वृत्तिसंसृष्टविषय-

मात्रावभासकत्वात् तस्य किञ्चिज्ज्ञत्वम् उपपत्स्यते* इति चेत्, मा एवं. एवं स्वभाववादेन समाधानेऽपि जीवस्य प्रकाशप्रतिबिम्बत्वाद् अवच्छिन्नत्वे च ज्ञानरूपत्वात् स्वप्ने 'स्वयञ्ज्योतिष्ट्व' ( बृह.उप.४।३।९ )प्रतिपादनात् च प्रकाशरूपत्वेन स्वप्नइव परोक्षवृत्ताविव च पूर्वपूर्वानादि-संस्कारवशादेव इन्द्रियं विनैव वृत्त्युपपत्तेः ज्ञानेन्द्रियाणि वृथैव स्युः.

किञ्च अयःपिण्डसमारोहेण दाहकस्य अग्नेः साक्षात्संसृष्ट-दाहकत्व-दर्शनाद् वृत्त्युपारोहेण प्रकाशकस्य जीवस्य साक्षाद् अन्तःकरण-संसृष्ट-प्रकाशकत्वं सुतरां सुवचमिति अन्तःकरणे प्रतिबिम्बितानां प्रकाशो अस्य स्यादेवेति अधिकं तत्र अनुप्रविशेत्.

वस्तुतस्तु एवमपि गोत्वस्य सकलगोव्यक्तिष्विव एकस्यैव जीवस्य सर्वान्तःकरणसंसर्गस्य वक्तव्यत्वात्. तथा सति तत्तदन्तःकरणवृत्तिनिर्गमेण तत्तद्विषयप्राप्तौ तत्तद्वृत्त्युपारूढस्य जीवस्यापि तत्तद्विषयोपरागसम्भवात्, सर्ववृत्तिसंसृष्टविषयाणां गोचरीकरणे बाधकाभावेन किञ्चिज्ज्ञत्वस्य अनुपपन्नत्वमेव. अतो विषयविषयिभावो वा, विषयसन्निहित-जीवचैतन्य-तादात्म्यापन्न-वृत्तिविषय-संयोगद्वारको जीवविषययोः परम्परासम्बन्धो वा, अन्तःकरणवृत्त्युपादनस्य जीवस्य वृत्ति-विषय-संयोग-जनितः कार्याकार्यसंयोगात् कारणाकारणसंयोगात्मा साक्षात् संयोगो वा अन्तःकरणोपहितस्य विषयावभासकचैतन्यस्य विषय-तादात्म्यापन्न-ब्रह्म चैतन्याभेदाभिव्यक्तिद्वारा विषय-तादात्म्य-सम्पादनं वा, अन्यद् वा यत्किञ्चन चिदुपरागत्वेन अभिधित्सितं तस्य सर्वस्य वृत्तिसंसर्गजनितत्वेन वृत्तिजनकानां च अन्तःकरणानां सर्वशरीर-व्यापक-जीव-संसृष्टत्वेन, सर्वेषां सर्वज्ञतापत्तिः अनिवार्यैव. तत्रापि अनुपदोक्ते विषय-तादात्म्य-सम्पादन-पक्षे मैत्रस्य चैत्रदर्शने ''अहं चैत्रः'' इत्याद्याकारकज्ञानापत्तिः अधिका आयातीति फल्गून्येव एतानि कल्पनानि.

अथ जीवः सर्वगतोऽपि अविद्यावृतत्वात् स्वयम् अप्रकाशमानतया विषयान् अनवभासयन् विषयविशेषे वृत्त्युपरागादौ आवरणतिरोधानेन तत्रैव

अभिव्यक्तः तमेव विषयं प्रकाशयतीति आवरणभंगपक्षः किञ्चिज्ज्ञत्वार्थम् आलम्ब्यते. तदापि आवरणस्य वृत्त्युपरागतिरोभाव्यत्वाद् जाते वृत्त्युपरागे तेन आवरणभंगे सर्वान्तःकरणसंसृष्टो जीवः तत्तद्विषयेषु अभिव्यक्तः तं-तं विषयं प्रकाशयेदेवेति न किञ्चिज्ज्ञत्वोपपत्तिः. एवञ्च चैतन्यमात्रावरकाज्ञानस्य खद्योतप्रकाशेन महान्धकारस्येव ज्ञानेन एकदेशाज्ञाननाशो वा, पटवत् संवेष्टनं वा, भीतभटवद् अपसरणं वा, चैतन्यमात्रावरकस्यापि अज्ञानस्य तत्तदाकार-वृत्ति-संसृष्टावस्थ-विषय-चैतन्यानावरकत्व-स्वाभाव्यं वा, मूलाज्ञा-नावस्था-भेद-रूपाज्ञानान्तर-नाशो वा, अन्यो वा, यः कश्चनावरणभंगो निरुच्यतां स सर्वोऽपि वृत्त्युपरागजन्यएवेति जाते वृत्त्युपरागे पूर्वोक्तरीत्या सकलान्तःकरणसंसृष्टस्य जीवस्य सर्वज्ञतैव आयातीति न एतेऽपि रोचिष्णवः पक्षाः.

*ननु एकस्मिन्नपि जीवे जन्मान्तरम् आपन्ने पूर्वजन्मानुसन्धानादर्शनात् शरीरभेदस्य सुखाद्यननुसन्धान-प्रयोजकत्वं क्लृप्तमिति सएव किञ्चिज्ज्ञतायाअपि प्रयोजको भवतु. तथाच व्यापकस्यापि जीवस्य शरीरान्तरे शरीरान्तरीयान्तःकरण-वृत्त्यादिभिः ज्ञानं न भविष्यतीति न सर्वेषां सार्वज्ञ्यापत्तिः* इति चेत्, न, शरीरभेदस्य अननुसन्धानप्रयोजकतायाः योगिकायव्यूहे जातिस्मरे भूतादौ च व्यभिचारेण तस्य किञ्चिज्ज्ञतायामपि अतन्त्रत्वात्.

एतेनैव भोगायतनभेदस्य विश्लिष्टोपाधिभेदस्य च अननुसन्धानप्रयोजकत्वं परास्तं बोध्यम्, "उद्यदायुधदोर्दण्डाः पतितस्वशिरोक्षिभिः पश्यन्तो पातयन्ति स्म कबन्धाः अप्यरीन् युधि" ( महाभा. ) इति भारते भूतार्थवादात् च. नच *योगिप्रभृतिषु प्रभावविशेषेण अनुसन्धानेऽपि पूर्वोक्तोपाधीनाम् उत्सर्गतः तथात्वात् न अननुसन्धान-प्रयोजकत्व-हानिः* इति वाच्यं, बहुषु व्यभिचारदर्शनात्. एकत्र तथा दर्शनेहि औत्सर्गिकाननुसन्धान-तन्त्रत्वाविघातः प्रभाव-विशेष-समवधान-वशात् कल्पयितुं शक्यते, नतु बहुषु तथादर्शने. अतो मनुष्यविशेषेषु भूतेषु, मनुष्याद् उत्कृष्टयोनिषु सर्वेषु च, पूर्वजन्मीनज्ञानस्य तत्रतत्र उक्तेः शास्त्रस्य प्रामाण्यात् च, न पूर्वोक्तोपाधीनाम् अननुसन्धानतन्त्रत्वं साधीयः.

नापि अन्तःकरणभेदस्य तथात्वं, दृष्टिसृष्टिवादे पूर्वपूर्वस्य अन्तःकरणस्य नष्टत्वेन अग्रिमाग्रिमस्य तस्य भिन्नत्वात् पूर्वद्रष्टानुसन्धानाभावप्रसंगात्. साक्ष्यैक्यैन तत्समर्थनेतु अन्तःकरणभेदस्य अप्रयोजकत्वात्, तत्तदन्तकरणे अस्य सर्वज्ञतायाएव आपत्तिः. अन्तकरणवैजात्येन समर्थनन्तु मज्जत-फेनावलम्बन- कल्पत्वात् कदर्यमेव. ''पादेन स्पृशामि''-''कर्णाभ्यां शृणोमि''-''चक्षुषा पश्यामि'' इति बाह्यकरणभेदेऽपि एकस्य ज्ञानवत् ''तेन-तेन अन्तःकरणेन तत्तद् जानामि'' इत्यादिज्ञानस्य अन्तकरणवैजात्येऽपि सुवचत्वात्. सृष्टिदृष्टिवादम् आलम्ब्य अन्तःकरणैक्यांगीकारेण समर्थनेऽपि बहिःकरणवैजात्यस्यैव अन्तःकरणभेदस्यापि अप्रयोजकत्वाद् उक्तदूषणं निर्बाधमेव. नच *फलबलात् न अन्तकरणभेदस्य अप्रयोजकत्वम्* इति वाच्यं. फलबलस्य साधनभेदकल्पनामात्रप्रयोजकत्वेन अन्तःकरणभेदकल्पने अप्रयोजकत्वात्. फलबलेन जीवभेदकल्पनेऽपि दोषाभावात्. अतो व्यापकः एकः प्रतिबिम्बो जीवः इतिपक्षे कथमपि न सर्वज्ञतापत्तिपरिहारः.

*ननु तर्हि अस्तु नानाणुजीववादः. तथासति अन्तःकरणे प्रतिबिम्बित-चैतन्य-रूपस्य जीवस्य परिच्छिन्नत्वेन सर्वसंसर्गाभावात् न सर्वज्ञतापत्तिः भवित्री. विषयप्रकाशस्तु विषय-संसृष्ट-वृत्ति-द्वारा, तडागसलिलस्य कुल्याद्वारा केदारसलिलैक्यवद्, जीवस्य विषयावच्छिन्न-ब्रह्मचैतन्याभेदाभिव्यक्तौ भविष्यतीति किञ्चिज्ज्ञत्वम् उपपत्स्यते* इति चेत्, न इदं युक्तं भाति, ''सलिल एको दृष्टा(ऽद्वैतो) भवति'' (बृह.उप.४।३।३२) इति श्रुत्या सुषुप्तावेव जीवब्रह्मणोः एकीभावश्रवणात् तदितरत्र तदुपगमे श्रुतिविरोधाद्, जाग्रदादौ व्यावतर्कोपाधेः विद्यमानत्वात् च, दर्पणसत्त्वे बिम्बप्रतिबिम्बयोरिव जीवब्रह्मणोः अभेदस्य अशक्यवचनत्वात्.

किञ्च जीवब्रह्मणोः इदानीम् अभेदे अन्योऽन्यधर्म-विनिमयाद् ब्रह्मणो अल्पज्ञता अन्यस्य सर्वज्ञता च आपत्स्यत-इति न उक्त-दूषणोद्धार-सम्भवः. यदिच बिम्बभूतं विषयाधिष्ठान-चैतन्यमेव साक्षाद् आध्यासिक-सम्बन्ध-लाभाद् विषयप्रकाशकमिति आध्यासिक-सम्बन्धोपलक्षित-चैतन्यात्मना जीवैकीभावो,

ननु बिम्बत्व-विशिष्टरूपेणेति भेदस्यापि सद्भावात् न उक्तदूषणापत्तिः* इति विभाव्यते, तदापि विषय-तादात्म्यापन्न-ब्रह्मणातु एकीभावो अस्य जातएवेति "अहं घटः" इत्याकारक-ज्ञानापत्तिः, अध्यासेन अन्तःकरणतादात्म्यापत्त्या 'अहम्' इति ज्ञानवद्, अन्तःकरणधर्माणां सुखादीनां स्वस्मिन् अभिमानवद् विषयधर्माणामपि अभिमानप्रसङ्गो, "अयं घटः" इत्यादिज्ञानाभावः च स्यात्.

यदिच *विषयावच्छिन्नं ब्रह्मचैतन्यं विषयसंसृष्टायाः वृत्तेः अग्रभागे विषयप्रकाशकं प्रतिबिम्बम् अर्पयति, तस्य प्रतिबिम्बस्य जीवेन एकीभावे अभेदाभिव्यक्तिः, तस्यां सत्यां विषयप्रमितिः* इति विभाव्यते, तदातु सुतराम् असङ्गतं, वस्त्वन्तरावरुद्धे दर्पणादौ प्रतिबिम्बादर्शनाद्. विषयसंसृष्टे अग्रभागे ब्रह्मप्रतिबिम्बायोगात् विषयप्रकाशस्यैव अभावप्रसक्तेः. किञ्च प्रतिबिम्बार्पकं चैतन्यं यदि विषयाद् बहिः तदा तस्य वृत्तिसंसृष्टत्वात् प्रतिबिम्बायोगः ? यदिच विषयान्तः तदापि विषयेन व्यवधानात् तथा. यदि विषयाद् दूरवर्तिनः तदा विषयावच्छिन्नत्वस्यैव अयोगः. किञ्च अन्तःकरणोपाधि-परिच्छिन्न-प्रतिबिम्बस्य अणुत्वाद् ऊर्ध्वदर्शने वृत्तिद्वारा तस्य निर्गमात् प्राणानामपि निर्गमापत्तिः, "तमुत्क्रामन्तं प्राणानूत्क्रामन्ति" ( बृह.उप.४।४।२ ) इति श्रुतेः. किञ्च एवं कल्पनैकशरणत्वे गोलकद्वारा तैजसस्य वेगवतो वृत्तिरूप-परिणामस्य निर्गमादेव प्रमातृ-वृत्ति-विषय-चैतन्याभेद-सिद्ध्या विषय-प्रकाश-सम्भवे गोलकातिरिक्तेन्द्रिय-कल्पनापि वृथा स्यात्. तस्माद् अनादरणीयाएव एते पक्षाः.

एतेन प्रमाणचैतन्यस्य विषयावच्छिन्न-चैतन्याभेदः ज्ञानस्य प्रत्यक्षत्वप्रयोजकः इत्यपि निरस्तम्.

किञ्च यत्र भ्रमद्घटो गृह्यते तत्र वृत्त्युपरञ्जकस्य भ्रमणस्य विषयनिष्ठत्वाभावेन ततः चिदुपरागायोगात् तदग्रहणापत्तिः. नच *तत्र अर्निवचनीयं तज्जन्यतइति सुखेन तद्ग्रहणसम्भवः* इति वाच्यं, वृत्त्या घटाकारिकया आवरणाभिभवेन भ्रमणांशे विक्षेपस्य अशक्यवचनत्वात्.

किञ्च वृत्त्या विषयचैतन्याभेदाभिव्यक्तावपि विषयप्रकाशके ब्रह्मचैतन्ये तदभावात्, नयनप्रदेशे तदननुभवेन इन्द्रियेऽपि तदभावाद्. वृत्तिमात्रजनकस्य इन्द्रियसम्प्रयोगस्य विषयकारणत्वात्. क्लृप्तेश्च सम्प्रयोगेणापि विषये तदाधानायोगाद्, अन्तःकरणावच्छिन्नेऽपि "अहं भ्रमामि" इति अननुभवात् स भ्रमः सर्वत्र अलब्धसत्ताको घटेऽपि न स्याद्. यस्मात् क्वापि असन् घटदेशे अनुभूयते, तस्मात् तद्देशावच्छेदेन जायमाने मनोधर्मरूपे ज्ञाने अस्ति. तत् चेत्, प्रमातृविषय-चैतन्याभिन्नं स्यात्, तदा स भ्रमः सर्वानुभवगोचरः स्यात्. यस्मात् न एवं तस्मात् तज्ज्ञानं कार्यरूपं भिन्नमेव इति निश्चयः. नच *शुक्ति-रजतादिस्थले इदमाकारवृत्तौ सत्यामपि रजताध्यासदर्शनात् अंशतएव आवरणनाशइति, अंशान्तरेण भ्रमविक्षेपोऽपि भविष्यतीति, न तदननुभवानुपपत्तिः* इति वाच्यं, (क) विषये तत्सत्त्वे अन्येषामपि तदनुभवापत्तेः, (ख) अन्येषां घटद्रष्टृणां प्रमाणवृत्त्या तदंशावरणनाशाद् अस्यापि तदनुभवापत्तेश्च विषयाश्रितावरणपक्षस्यैव दुष्टत्वात्, (ग) पुरुषाश्रितपक्षेतु, उक्तरीत्या, प्रमातरि प्रमाणे प्रमेये च वक्तुम् अशक्यत्वेन घट्टकुटीप्रभातवद् अननुभवस्य सर्वानुभवगोचरत्वस्य वा आपातात् शुक्तिरजतस्यापि एतत्तुल्यत्वाद्, (घ) एवंमूलाज्ञानावस्थारूपाज्ञानानां नानात्वं अङ्गीकृत्य, घटावरकाज्ञानस्य घटाकारकवृत्त्या निवृत्तावपि, नैश्चल्यावरकस्य अनिवृत्त्या भ्रमविक्षेपादरणेऽपि, पूर्वोक्तरीत्या पुरुषनिष्ठतैव तस्य वाच्येति चैतन्याभेदस्य पूर्ववदेव असिद्धेः, वृत्तेः ज्ञानात्मकत्वमात्रकल्पनया तस्य उत्पत्तिनाशशालित्वमात्रेण निर्वाहे विषयावरण-तन्नानात्व-कल्पनयोः गुरुत्वाद् अप्रमाणिकत्वात् च.

एतेनेव घटावरकाज्ञानगतावरण-शक्तिमात्रनिवृत्तिः नतु विक्षेप-शक्ति-निवृत्तिरपि इति पक्षो निरस्तो बोध्यः, नैश्चल्यावरणम् अन्तरेण भ्रमणविक्षेपासम्भवाद् आवरण-शक्ति-निवर्तकतायाः अप्रयोजकत्वात् च, जलप्रतिबिम्बित-वृक्षाधोग्रत्व-भ्रमेतु प्रतिबिम्ब-पदार्थस्य अतिरिक्तत्वेन, मूलसमीपवर्तिनि जले मूलस्य — ततो विप्रकृष्टे अग्रस्य — प्रतिबिम्बाद् प्रतिबिम्बत्वेनैव अवगाहाद् भ्रमत्वस्यैव दुर्वचत्वेन तत्र आवरणादि कल्पनायाएव अयोगात् च इति दिक्.

अतो जन्यज्ञानस्य इन्द्रियान्वय-व्यतिरेकानुविधान-दर्शनात्, शक्तिग्राहकेषु कोशादिषु "प्रेक्षोपलब्धिः चित् संविद्" (अम.को.१।५।१) इति 'चिदा' दिभिः सह 'बुद्धेः' ऐकार्थ्येन वृत्तेः ज्ञानात्मकत्वनिश्चये तत्र ज्ञानोपचारपक्षस्य अयुक्तत्वात् च जन्यज्ञानम् अतिरिक्तमेव तदुत्पत्तिप्रणाडी च पूर्वोक्तरीतिकैव इति निश्चयः

भगवत्साक्षात्कारप्रणाडी :

भगवत्साक्षात्कारेतु न एषा प्रणाडी. तस्य प्रमेयबलादेव भवनात् "नायमात्मा..." (मुण्ड.३।२।३) इति श्रुतौ इतरसाधननिरासेन उपलक्षणविधया निरस्तत्वाद्, उत्तरार्धे (द्रष्ट."यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इत्यस्मिन्नंशे : मुण्ड.३।२।३) वरणस्य लाभसाधनत्वकथने स्वस्यैव तनुविवरणसाधनत्वोक्तेः च. वरणञ्च अनुग्रहः. सच धर्मान्तरमेव नतु फलदित्सा, "यस्य अनुग्रहम् इच्छामि" ( ) इति वाक्यात्. सच भक्तिबीजभूतो अतो "भक्त्या माम् अभिजानाति" (भग.गीता.१८।५५) "भक्त्यात्वनन्यया शक्यः" (भग.गीता.११।५४) "भक्त्या अहम् एकया ग्राह्यः" (भाग.पुरा.११।१४।२१) इत्यादिषु न विरोधः. अवतारदशायान्तु "मां सर्वे पश्यन्तु" इत्याकारिकया सामान्येच्छयापि दर्शनं; तत्रापि, नानाविधाभिः यथा "मल्लानामशनिः..." (भाग.पुरा.१०।४३।१७) इत्यादौ.

एवञ्च भक्त्या सामान्येच्छया च इति द्वेधा दर्शनम्. उभयथापि प्रमेयबलमेव कारणमिति न विरोधः. स्वसाधनसामग्र्यादिभिः दर्शनज्ञानन्तु अभिमानमात्रात्. अतएव "अविज्ञातं विजानतां विज्ञातम् अविजानताम्" (केनोप.२।३) इत्यादिश्रुतिः सङ्गच्छते. "मनसैवानुद्रष्टव्यः" (बृह.उप.४।४।१९) इत्यादावपि प्रमेयबलानुगृहीतमेव तदभिप्रेतमिति श्रुत्यन्तराविरोधाय अनुसन्धेयम् इति शुभम्.

**इति प्रस्थानरत्नाकरे प्रमाणपरिच्छेदे प्रमाकरणस्वरूपनिरूपके द्वितीये कल्लोले प्रत्यक्षप्रमाकरणनिरूपको तृतीयः तरङ्गः**

**समाप्तः**

# 'Prasthānaratnākar' Prstāvanā

by Goswami Sri Shyammnoharji

## प्रत्यक्षप्रमाके करणका निरूपण

English Translation : Dr. Mrs. Sunanda Y. Shastri

Sense organs should be understood as the means of direct perception. The sense organs of six kinds viz. eye, skin, nose, tongue, ear and mind (मनस्). Mind is internal and external both, since it is connected with action and knowledge. These sense organs are atomic in size, beyond the grasp of gross sense organs and though they are not eternal, still they are long lasting and changing or subject to transformation.

As their objects, the manifested form, objects having manifested form, number, measurement, disjunction, conjunction, division, otherness, separateness, speed etc. qualities, action manifested in these, their category (जाति = universality) indicated by suffix (त्व) (Tva) and all these qualities, actions and properties with their substratum.

Qualities, actions and properties and their one ness with the substance, in which the manifested touch and (objects) having manifested touch are perceivable by the skin (tactual). Substance having manifested smell, and the qualities actions and properties of such substance and their oneness with

substratum are perceivable by nose (olfactory). Taste, substance having taste, qualities, actions and properties of substance having manifested taste and their oneness with substratum are perceivable by tongue (Qustatory). Sound, substance having sound, qualities, actions and properties of substance having manifest sound and their oneness with substratum, are perceivable by ear (auditory).

According to some thinkers, nose, tongue and ear these organs do not perceive the substance, but only perceive qualities. But according to Vāllabha Vedānta, it is better to hold that these sense organs perceive the substance. It is because in the experiences of milk after drinking milk in the darkness of night, of flowers after smelling Campaka etc. fragrant flowers and of trumpet after hearing trumpet sound etc., objects are directly perceived by tongue, nose and ear respectively.

The Earth having manifested qualities, becomes object of the five sense organs. Water having manifested qualities becomes the object of four sense-organs, except nose. Fire becomes object of three sense organs except nose and tongue. Wind becomes object. of two sense, organs viz. skin and ear. The sky is formless therefore, not perceivable by the eyes, but by the power of object to be known (प्रमेयबल) space becomes visible to eyes. Similarly directions and time both are not perceivable by the sense organs, still they both being the adjectives of perceivable objects, are perceived.

Desire etc. are variations of mind are perceived by the mind

Soul, in its true form is perceivable only through the means prescribed in the scriptures and not by the worldly direct perception. Though the soul being one with the notion 'I' (ego) becomes perceivable by the intellect having notion 'I' (ego). Or perception of the soul, in its pure form, cannot be perceived by ordinary perception. Only through proper means, prescribed by the scriptures, the perception of soul is possible. The self can be experienced through the notion 'I'(ego) by an individual due to the identification of self with ego.

Reflections, illusory or ghost figures and hypnosis are experienced not because of the perceiving ability of sense organs, but because of the nature of that particular object, therefore, it is unnecessary to search cause and effect in appearance. Similarly, darkness is not accepted as the absence of light but it is Māyika (illusory) object. It is connected with the basic construction of human eyes. Hence other animals are able to see into darkness, since illusory ( मायिक ) darkness cannot cover their eyes. Human eyes become covered by the illusory ( मायिक ) darkness due to the lack of proper/enough light. Similarly, refrection also is accepted as one illusory ( मायिक ) object. This topic is discussed at length in Andhakāravāda and Pratibimbavāda.

Among the kinds of Abhāva (non-existence) accepted by Naiyākas prior non-existence ( प्रागभाव )is condition of

substance considered as ( उपादान ) (material cause) or ( समवायी ) coherent of the name form and actions of the effect with concealment ( तिरोभाव ) and favourable to the manifestation ( आविर्भाव ) of effect. Similarly. Posterior non-existence ( प्रध्वंसाभाव ) is unfavourable. State of the effect. Thus, by perceiving the material cause, the method of perception of prior non-existence and posterior non-existence can be understood. This topic has been explained in detail in 'Āvirbhāvatirobhāvavāda' chapter of Avatāravādāvalī, therefore, not discussed here in detail. As far as the 'Mutual non-existence' ( अन्योन्याभाव )is concerned. It should be noted that it is in two wys. Viz. first of all, in the example of "Pot is not cloth". The absence of pot in the cloth is experienced and objected as "Can pot be cloth?" which is refuted as "Pot cannot be cloth". Thus, the mutual non-existence can be perceived. The point to be noted here is, the relation by which cloth is absent in the substratum pot, by the same controlling relation. Clothness is absolutely absent in the substratum pot. Accepting thus mutual-non-existence ( अन्योन्याभाव) dose not remain as an independent variety of non-existence and it becomes 'Absolute non-existence' ( अत्यन्ताभाव ). As Pot exists in the pot by the relation of identity ( तादात्म्य ), it does not exist in the cloth, such kind of explanation is given about Mutual-non-existence. By imposing non-existence of cloth on the pot and then negating it, the total form of pot is revealed by the concealment of cloth. Therefore, it is proper to include the mutual non-existence of cloth and pot in the form of cloth and

pot. The last kind of non-existence i.e. Absolute non-existence (अत्यन्ताभाव) should be understood as concealment (तिरोभाव). Because 'Absolute non-existence' cannot be deemed as essenceless like sky-flower (खपुष्प). The absence of anything in any place is called its 'Absolute non-existence', then definition of absence is formed through the experience of concealment of that object. Then only "Pot is not on the floor" such kind of perception of the floor associated with concealment of pot is perceived.

After the explanation of sense organs, their actions need to be explained. The action of sense organs is called (प्रत्यासत्ति)=contact. It is of two kinds, viz. (1) Ordinary actions and (2) Extra-Ordinary actions.

Ordinary actions are again of five kinds viz.:

(1) Contact (संयोग)

(2) Identity (तादात्म्य)

(3) Conjunction and identity (संयुक्ततादात्म्य)

(4) Conjunction-cum-adjectivity (संयुक्तविशेषणता) and

(5) Essence (स्वरूप).

Visual perception of substance takes place when the substance comes in contact with the eyes. The perception of emotions like determination, doubt, pleasure etc., which arise within through mind (मनस्), takes place through identity-contact. Perception of qualities, actions and properties in the substance is possible through conjunction and identity

( संयुक्ततादात्म्य )contact. Concealment( तिरोभाव ) is always perceived in the form 'conjunction-cum-identity' ( इन्द्रियसंयुक्त-विशेषणता) contact with sense organs. Similarly, to perceive mental states, form of those mental states themselves become contact.

Extraordinary activities are of three kinds viz. 1. Universal ( Sāmānya ); 2. Supra sensuous ( Yogĵ ) and 3. Māyā.

General properties in the persons are perceived by the universal contact. Therefore, universal contact is useful in the inherent knowledge of particular person. Future, past or extra sensory things are perceived by Supra sensuous contact. The Māyika contact creates perceptual error without manifesting non-existent or concealed objects presenting in the intellect in particular time-space.

After this discussion, the author has discussed in detail the Anupalabdhi Pramāṇa (non-apprehension), which is presented to define perception of non-existence of the object, according to those schools of thought, which accept object as existing and non-existing both. In this regard, after evaluating the views of ŚrīPārasanāth Miśra, Vedānta-paribhāṣākār, VaiṣesAesYikas and Naiyāyikas, the author has expressed his own view, stating that, it is not necessary to accept non-apprehension ( Anupalabdhi ) as an independent means of valid knowledge to perceive non-existence. Because, just as after perceiving particular object through the eyes, its

knowledge is manifested. Similarly, we do not get knowledge of any object through non-apprehension ( अनुपलब्धि ).

Indeterminate knowledge created by the Sense-object contact achieves its visual etc. determinate state through mental states. Therefore, discussion of nature of mental states becomes necessary.

Form of the objects seen outside, can be felt within after closing eyes. This form cannot be of the outer object, because abandoning outer substratum, entering of that form within seems impossible. So, that form has to be accepted as the form of some inner object within. Sāṅkhya school calls it Vṛtti (state) as different egoistic principle. Naiyāyikas believe that the rays of the eyes reach the object and there is sense object contact. Through this sense object contact some kind of impression is formed, which is inherent in the Ātman, accepting thus, they reject the Vṛttis (state).

It is necessary to note that, the form of the perceived object in the eyes is matter of experience ( अनुभवगोचर ), therefore, it is proper to accept internal state. It should not be deemed as different principle or different inherent properly of Ātman. Because, this is some particular state of intellect according to Vāllabha Philosophy. How can the internally set intellect take form of outer object; answer to such doubt is: When sense organs combined with the mind come in contact with outer objects, then form of the object

is reflected in sense organs, just as one's face is reflected in the mirror. Continuous mixing and friction of the Sattva, Rajas and Tamas cause disturbance, and non-disturbance in the intellect; therefore, due to this disturbance, mental state, sometimes is transformed, partially or totally taking the shape of reflections in the sense organs of outer objects and sometimes it may not take any shape also. It happens so, because intellect helps cognitive organs and organs of actions, therefore, when intellect is in position of helping the organs determinate knowledge and favourable activity to that arise. Sometimes, when helping nature of intellect is obstructed due to increase of Rājas or Tamas, then doubt or determinate knowledge of error arises. Thus, all these mental states are particular state of intellect only. After intellect is shaped in the form of object supplied by sense object contact, then only direct perception takes place. Otherwise if intellect is shaped in the form different than the object then it is believed to be an error. Similarly, due to the various kinds of mental states, all other subdivisions of knowledge should be understood as an outcome of different mental states. As per the statement of Bhāgavata, *"Mental states, viz. awakening, dreaming and deep sleep are emerge from Guṇas and individual soul is definitely different from them as spectator"* proves that all kinds of knowledge is mental state only. When the enjoyment giving Karmas arise, that is waking state, when those Karmas become dormant then it is dream or state of deep sleep. Instead of accepting such kind of theory, it is proper to accept that the mixing and friction among three Guṇas, which

च इन्द्रियत्वमपि इति हेतुकम्. एवं हि ''**इन्द्रियाणां मनः च अस्मि**'', ''**इन्द्रियेभ्यः परं मनः**'' ( भग.गीता.३।४२ ,१०।२२ ) इत्याद्युभयविधनिरूपणानुरोध्येव तथास्वीकर-णम् इति प्रतिभाति.

यत् पुनः घ्राणरसनश्रवणादीनां द्रव्याग्राहकत्वोपपत्तितया पूर्वाननुभूतदुग्धानामपि रसनया दुग्धरसास्वादे तमसि दुग्धानुभूत्यापादनं तत्तु जायमानं सर्वं प्रथमं ज्ञानं निर्विकल्पकम् अथ द्वितीयादि तु सविकल्पकमेव इति वदतां वादिनां कृते सर्वस्यापि सविकल्पकप्रत्यक्षस्य अनुमित्यन्तर्भावाय किं न प्रभवेत्? सर्वाः हि धर्मप्रतीतयो धर्मिप्रतीतिहेतुकाः इति अदण्डवारितया व्याप्तिनिश्चयसंस्कारसहितया घटत्वप्रतीत्या स्फीतालोकेऽपि घटप्रत्यक्षस्य घटानुमितित्वप्रसक्तिः.

सर्वथा हि तत्र सौजन्य-सारल्य-सौहृद-वैदुष्याद्यनेकगुणोपेतैः श्रीदेवनाथन् महोदयैः प्रत्यक्षप्रमाणविचारगोष्ठ्यां वाल्लभवेदान्ताभिमतप्रत्यक्षप्रक्रियालोचनं यत् समुपस्थापितं तदर्थं ते भूयोभूयो धन्यवादार्हाः न तत्र शंकालेशोऽपि इति विरमति अयं संगोष्ठ्युत्तरलेखनस्य कर्ता.



# द्वैतदर्शने प्रत्यक्षस्वरूपम्

प्रो. डी. प्रह्लादाचार

द्वैतदर्शनरीत्या प्रत्यक्षप्रमाणविषये वक्तुम् अहम् आदिष्टो अस्मि. इतरदर्शनेषु समानाः ये अंशाः तान् अंशान् विहाय द्वैतदर्शने ये विशेषांशाः भवन्ति तानेव प्रस्तोतुम् इच्छामि.

द्वैतदर्शने प्रमाणसामान्यलक्षणम् उच्यते : "यथार्थं प्रमाणम्" इति. एतस्मिन् मते प्रमाणं द्विविधं : १. केवलप्रमाणम् २. अनुप्रमाणं च इति.

'केवलप्रमाणं' नाम यथार्थं ज्ञानम्. ज्ञानं भवति केवलप्रमाणम् यदि ज्ञानं यथार्थं स्यात्. तथाच इन्द्रियजन्यं ज्ञानं वा भवतु, शब्दजन्यं ज्ञानं वा भवतु, अनुमानजन्यं वा ज्ञानं भवतु तत् सर्वं केवलप्रमाणं भवति. अपिच इन्द्रियम् अथवा अनुमानं, शब्दः एतान्यपि प्रमाणत्वेन अंगीक्रियन्ते. तथाच केवलप्रमाणम् अनुप्रमाणं च इति प्रमाणं द्विविधम्. यथार्थज्ञानं केवलप्रमाणं, यथार्थज्ञानसाधनम् अनुप्रमाणम्. यथार्थज्ञानसाधनञ्च त्रिविधं भवति : १. प्रत्यक्षम् २. अनुमानं ३. शब्दः च इति.

केवलप्रमाणस्य अनुप्रमाणस्य च अनुगतं लक्षणं भवति प्रमाणत्वम्. "यथार्थं प्रमाणम्" इति उभयमपि प्रमाणत्वेन स्वीक्रियते. अतएव 'यथार्थत्वं' प्रमाणसामान्यलक्षणम् उच्यते. यथार्थत्वं प्रमाणसामान्यलक्षणम्. 'यथार्थत्वं' नाम यथावस्थित-ज्ञेयविषयीकारित्वम्. वस्तु ...

**वी. एन्. झा :** ...

**डी. प्रह्लादाचार :** अनुप्रमाणेष्वपि.

**वी. एन्. झा :** ज्ञानमेव? ...

**डी. प्रह्लादाचार :** नहि. ज्ञानं वा भवतु इन्द्रियादिकं ज्ञानसाधनं वा भवतु तद् उभयमपि यथार्थं, यथावस्थितज्ञेयविषयीकारि इति. अर्थो यथा अवतिष्ठते तथा विषयीकरोति चेत् यथावस्थितार्थविषयीकारित्वम् आयाति. इदञ्च ज्ञानस्यापि भवति, इन्द्रियादीनामपि ज्ञानसाधनानां भवति. परन्तु अत्र इदं वैलक्षण्यम् अस्ति, ज्ञानं साक्षाद्वस्तुविषयीकारि, ज्ञानसाधनानितु ज्ञानद्वारा वस्तुविषयीकारीणि भवन्ति. परन्तु, यथावस्थित-ज्ञेयविषयीकारित्वं, यथावस्थितार्थविषयीकारित्वम् उभयसाधारणं भवति, केवलप्रमाणस्य अनुप्रमाणस्य च साधारणं भवति इति अंगीक्रियते. तत्र अनुप्रमाणं त्रिविधम् इति उक्तम् : १. प्रत्यक्षम्, २. अनुमानं, ३. शब्दः च इति.

प्रत्यक्षस्य लक्षणम् उक्तं : ''निर्दोषार्थेन्द्रिय-सन्निकर्षः प्रत्यक्षम्'' इति. 'प्रत्यक्ष'शब्दः कदाचिद् ज्ञाने प्रयुज्यते, ज्ञानसाधनेऽपि कदाचित् प्रयुज्यते. यदा ज्ञानं प्रत्यक्षम् इति उच्यते तर्हि निर्दोषार्थेन्द्रिय-सन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् इति भवति. यदाच ज्ञानसाधनं प्रत्यक्षम् इति उच्यते तदा निर्दोषार्थेन्द्रिय-सन्निकर्षः प्रत्यक्षम् इति उच्यते.

'निर्दोषत्वम्' उभयोः विशेषणम्; इन्द्रियस्य अर्थस्य च. निर्दोषेन्द्रियस्य निर्दोषेण अर्थेन सह यः सन्निकर्षः स प्रत्यक्षम्. काचकामलादयः दोषाः इन्द्रियदोषाः भवन्ति. अतिदूरस्थत्वम् अतिसामीप्यं, सौक्ष्म्यं, व्यवधानम् इत्यादयः अर्थदोषाः भवन्ति. एवञ्च दोषरहितेन्द्रियेण दोषरहितस्य अर्थस्य यः सन्निकर्षः भवति सः प्रत्यक्षम् इति अंगीक्रियते.

**मनसः इन्द्रियत्वम् :**

तत्र कैश्चित् पञ्च ज्ञानेन्द्रियाणि स्वीकृतानि. बाह्येन्द्रियाणि पञ्च अन्तरिन्द्रियम् एकं मनः इति षडिन्द्रियाणि इति केषाञ्चित् मते भवति.

अद्वैतसिद्धान्तेतु मनसः इन्द्रियत्वं न स्वीकृतम्. पञ्चैव ज्ञानेन्द्रियाणि

स्वीकृतानि वर्तन्ते. किन्तु द्वैतदर्शने न पञ्चैव इन्द्रियाणि नापि षडेव किन्तु सप्त इन्द्रियाणि भवन्ति इति उच्यते. अयम् अत्र विशेषः.

तत्र इन्द्रियं द्विविधं भवति : १. प्रमातृस्वरूपं २. प्राकृतञ्च इति. प्रमाता भवति चेतनः. तत्स्वरूपम् इन्द्रियम्. तदात्मकम् इन्द्रियं 'साक्षी' इति उच्यते. इतराणि षडिन्द्रियाणि सर्वाण्यपि प्राकृतानि भवन्ति. पञ्च बाह्येन्द्रियाणि, अन्तःकरणम् एकम् एवं षडपि इन्द्रियाणि प्रकृतिपरिणामभूतानि भवन्ति. प्रकृतेः परिणामो महत्-तत्त्वं, महतो अहंकारः, अहंकारस्य परिणामभूतानि एतानि इन्द्रियाणि भवन्ति इति उच्यते.

अत्र मनसः इन्द्रियत्वं ये न अंगीकुर्वन्ति तत्र विरोधः क्रियते. प्रस्थानरत्नाकरेऽपि अयम् अंशः चर्चितो वर्तते. मनसस्तु "बाह्येन्द्रियाधिष्ठानेन सर्वबाह्येन्द्रियविषयविषयकेन्द्रियत्वम्". बाह्येन्द्रियाणां ये विषयाः भवन्ति ते सर्वेऽपि मनसोऽपि विषयाः. परन्तु न साक्षात्, बाह्येन्द्रियाधिष्ठानेन — बाह्येन्द्रियद्वारा. एवञ्च बाह्येन्द्रियाधिष्ठानेन सर्वबाह्येन्द्रिय-विषय-विषयकेन्द्रियत्वं मनसः लक्षणम् अंगीक्रियते. तत्र "सर्वबाह्येन्द्रिय-विषय-विषयकत्वम्" इत्येव यदि लक्षणम् उच्यते तर्हि मनसः साक्षाद् बाह्याः पदार्थाः विषयाः न भवन्ति. अतः सर्वबाह्येन्द्रिय-विषय-विषयकत्वं मनसो नास्ति इति असम्भवशंका स्यात्. तत्परिहाराय इदम् उच्यते "बाह्येन्द्रियाधिष्ठानेन" इति. बाह्येन्द्रियद्वारा, बाह्येन्द्रियाणि अधिष्ठाय मनो बाह्यानपि अर्थान् विषयीकरोति.

तत्र आक्षेपः प्रधानतया क्रियते मनसः इन्द्रियत्वे तस्य असाधारणं फलं किमपि स्यात्. असाधारणं फलं मनोजन्यं किमपि नास्ति. विषयभेदोऽपि नास्ति. यतोहि मनसः ... इतरेषाम् इन्द्रियाणां ये विषयाः तएव मनसः विषयाः. इतरैः इन्द्रियैः यत् फलम् उत्पद्यते तदेव फलं भवति मनसः फलम्. एवञ्च असाधारणो विषयोऽपि नास्ति, असाधारणं फलमपि नास्ति तस्मात् मनसः इन्द्रियत्वं कथम्? इति प्रश्नः सम्भवति.

तत्र उच्यते, असाधारणविषयो नास्ति इति भवतु नाम. असाधारणन्तु फलम् अंगीक्रियते. मनसः स्वातन्त्र्येण स्मरणसाधनत्वम् अंगीक्रियते. बाह्येन्द्रियम् अद्वारीकृत्यापि मनः साक्षात् स्मरणस्य साधनं भवति. एवञ्च अस्मिन् दर्शने स्मरणं मानसप्रत्यक्षमेव. इन्द्रियजन्यज्ञानत्वं हि प्रत्यक्षस्य लक्षणम्. मनोजन्यं ज्ञानं भवति स्मरणम्. तस्मात् कारणात् स्मरणरूपं यत् फलं वर्तते तत् न कस्यापि इतरस्य इन्द्रियस्य. मनसएव तत् फलं भवति. एकम् असाधारणं फलं किमपि वर्तते तस्मात् मनः पृथगिन्द्रियम्.

**प्रद्योतकुमार :** तस्य प्रत्यक्षत्वं कथम् ?

**डी.प्रह्लादाचार :** इन्द्रियजन्यं ज्ञानं प्रत्यक्षम् ...

**प्रद्योतकुमार :** इन्द्रियत्वं मनसः इदानीमपि न उपपादितम्! यदि तस्य फलभेदो अस्ति तदैव तस्य इन्द्रियत्वम्. इन्द्रियत्वम् अद्यापि उपपादितम्. अन्योन्याश्रयो भवति.

**डी.प्रह्लादाचार :** तत्रापि विचारं करोमि.

मनः प्रमाणमेव न भवति इति एकं मतम्. प्रमाणं कुतो न भवति? इति चेत्, प्रमायाः अनाश्रयत्वात्. पूर्वपक्षम् अनुवदन् अस्मि. मनोवृत्तयो याः उत्पद्यन्ते तासामपि ज्ञानत्वं स्वीकृतम् वेदान्तिनां मते. वृत्तयः चैतन्यरूपं च इति ज्ञानं द्विविधं भवति. वृत्त्यात्मकमपि ज्ञानम् अंगीक्रियते. ताश्च वृत्तयो मनसो विकारभूताः, परिणामभूताः. तस्मात् तासां वृत्तीनाम् आश्रयो मनो अंगीक्रियते. मनो यदा प्रमायाः आश्रयो भवति, प्रमाश्रयत्वात् मनः प्रमाणं न भवति. अयम् एकः पूर्वपक्षः. मनः प्रमाणमेव नास्ति. यथा प्रमाता नहि प्रमाणं भवति. नैयायिकानामपि मते ईश्वरः प्रमाणम् अंगीक्रियते. परन्तु अयं जीवो यः प्रमाता, प्रमायाः आश्रयः, सः प्रमाणं न अंगीक्रियते. तद्वदेव मनसोऽपि वृत्तिरूपप्रमाश्रयत्वात् प्रमाणत्वमेव नास्ति इति अयम् एकः पूर्वपक्षः.

अपिच चक्षुरादीनां प्रमाणानां विषये मनसः सहकारित्वम् अस्ति.

प्रमाणसहकारित्वात् च तस्य प्रमाणत्वं नास्ति यथा आलोकस्य. चक्षुषा यदा ज्ञानं जायते तदानीम् आलोकः सहकारिकारणं भवति. तथा मनोऽपि सर्वेन्द्रियाणाम्. यदि सहकारिकारणस्य प्रमाणत्वं स्वीक्रियते तर्हि आलोकोऽपि प्रमाणान्तरं स्यात्. तस्माद् यथा आलोकस्य प्रमाणत्वं नास्ति तथैव मनसोऽपि प्रमाणत्वं नास्ति. तथाच प्रमाणसहकारित्वात्, प्रमायाः आश्रयत्वात्, अपिच पृथग् विषयस्यापि अभावतो मनसः इन्द्रियत्वं कुतः? इत्येवम् आक्षेपाः भवन्ति.

अद्वैतमतेन मनसः इन्द्रियत्वं यद् निराकुर्वाणेन इदमपि चिन्त्यते यत् गीतावाक्ये ''इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः'' इत्यत्र इन्द्रियेभ्यः प्रत्येकशः परो मनः संकीर्त्यते. यदि मनोऽपि इन्द्रियं स्यात् तर्हि ''इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः'' इति कुतः? एवं मनसः इन्द्रियत्वं नास्ति इति अत्र इदमपि एकं प्रमाणम् उच्यते.

तत्र सर्वत्रापि इदं समाधानम् उच्यते : मनसः फलं स्मरणं वर्तते. स्मरणस्य मनोजन्यत्वम् अंगीक्रियते. मनः करणम्. यथा चाक्षुषप्रत्यक्षं प्रति चक्षुः करणं भवति, संयोग-सन्निकर्षो वा अन्यसन्निकर्षो वा तत्र व्यापारो भवति, फलञ्च चाक्षुषप्रत्यक्षं भवति. तद्वदेव मनो अत्र करणं, संस्कारः सन्निकर्षः, स्मरणञ्च मनोजन्यं ज्ञानं फलम्.

मनसः इन्द्रियत्वे किं प्रमाणम् इति प्रच्छ्यते. अन्यथा अन्योन्याश्रयः स्याद् इति. अत्र उच्यते : मनसः इन्द्रियत्वे श्रुतयः स्मृतयः च प्रमाणं भवन्ति. गीतायामेव ''मनःषष्ठानि इन्द्रियाणि'' इति वाक्यम् अस्ति. तद्वदेव ''इन्द्रियाणां मनश्च अस्मि'' इति विभूतियोगे मनसः इन्द्रियाणां मध्ये अन्तर्भावः श्रूयते. यद्यपि ''इन्द्रियेभ्यः परा ह्यर्थाः'' इत्यत्र मनसः पृथक् कीर्तनं वर्तते. परन्तु, तेन मनसः इन्द्रियेभ्यः पृथक्त्वं वर्तते, इन्द्रियत्वं न अस्ति इति न वक्तुं शक्यम्. तत्र कुरु-पाण्डवन्यायेन तस्य कीर्तनम्. पाण्डवानामपि कौरवत्वम् अस्त्येव. अत्रापि ''सन्तानबीजं कुरु-पाण्डवानाम्''

इत्यादौ बहुत्र कुरुभ्यः पृथक् पाण्डवानां संकीर्तनं श्रूयते. तथैव इन्द्रियस्य मनसः इन्द्रियेभ्यः पृथक् प्रस्तावो न अयुक्तः.

मनसः इन्द्रियेभ्यः पार्थक्यं वदताम् अयम् अभिप्रायः : ''वेदान् अध्यापयामास महाभारतपञ्चमान्'' इति श्रूयते तत्र सजातीयगत-संख्या-पूरकत्वं सजातीयस्य इति नास्ति. वेदो अपौरुषेयो, महाभारतञ्च पौरुषेयं भवति. एवञ्च अनयोः वैजात्यम् अस्ति. अथापि ''महाभारतपञ्चमाः वेदाः'' इति उच्यन्ते. वेदविजातीयस्यापि महाभारतस्य पञ्चत्वसंख्यापूरकत्वं यथा अंगीक्रियते तथा ''मनःषष्ठानि इन्द्रियाणि'' इति अत्र इन्द्रियविजातीयस्यापि मनसः इन्द्रियगत-षट्त्व-संख्यापूरकत्वम् अंगीकर्तुं शक्यते इति. अत्र इदं वक्तव्यं यत् सजातीयस्य सजातीयगत-संख्यापूरकत्वमिव, विजातीयस्य विजातीयगत-संख्यापूरकत्वमपि दृश्यते इति उभयं सत्यमेव. परन्तु मनसः इन्द्रियत्वे अनेकानि प्रमाणानि वर्तन्ते. यथा ''इन्द्रियाणां मनश्चास्मि'' इति गीतावाक्यम्. अत्र मनसः इन्द्रियत्वं स्पष्टं प्रतिपादितम् अस्ति. अपिच भागवते ''इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः'' अस्मिन् वाक्ये ''इन्द्रियाणि दश एकञ्च'' इति मनः इन्द्रियान्तर्गतम् अस्ति. अत्र उपचारो नास्ति. अन्यत्र भागवते नवमस्कन्धे ''यतिः ययातिः संयातिः आयतिः वियतिः कृतिः, षडिमे नहुषस्य आसन् इन्द्रियाणीव देहिनः'' (भाग.पुरा.९।१८।१) इति. नहुषस्य षट्पुत्राः आसन् यथा तथा षडिन्द्रियाणि देहिनो वर्तन्ते इति वर्ण्यते. षडिन्द्रियाणि इति तत्र मनसः इन्द्रियेषु अन्तर्भावं स्वीकृत्य कथितं वर्तते. एवं भागवते तत्र-तत्र गीतायां च मनसः इन्द्रियत्वप्रतिपादनं स्पष्टं वर्तते इति हेतोः ...

**विन्ध्येश्वरीप्रसाद :** ...

**डी.प्रह्लादाचार :** तत्रतु समाधानम् उक्तम्. मनसः किञ्चिद् वैशिष्ट्यं वर्तते अतः मनसः पृथक् संकीर्तनम् इति. मनसो वैशिष्ट्यं किम्? इति चेत्, इन्द्रियसहकारित्वम्. सर्वेन्द्रियसहकारित्वं हि मनसो असाधारणो धर्मः. एवं मनसः इन्द्रियत्वे सिद्धे मनोजन्यं स्मरणात्मकं ज्ञानं प्रत्यक्षम्

इति स्वीकार्यम्.

अनेन नैयायिकैः—ज्ञानं द्विविधं : १. स्मृतिः २. अनुभवः च इति. अनुभवश्च चतुर्विधः : १. प्रत्यक्षम् २. अनुमितिः ३. उपमितिः ४. शाब्दः च इति यो विभागः क्रियते सो अपाक्रियते. स्मृतेरपि अनुभवएव अन्तर्भावो, मानसप्रत्यक्षम् इयं भवति इति हेतोः. तत्रच संस्कारस्य सन्निकर्षत्वं स्वीक्रियते.

अत्रापि कश्चन प्रश्नो भवति. संस्कारस्य अयं स्वभावो यत् पूर्वानुभूतं विषयम् उपस्थापयतीति. अननुभूतस्य विषयस्य उपस्थापकः संस्कारः कदापि न भवति. किन्तु, स्मरणे अनुभूताएव विषयाः विषयीक्रियन्ते उत अननुभूताअपि? इति.

स्मरणं तावत् ''सो देवदत्तः तत्र आसीत्''. 'सः' इत्यनेन अतीत-देशकालसम्बन्धः. तस्मिन् पुरुषे इदानीं विषयीक्रियते. 'अतीतत्वं' नाम ध्वंसप्रतियोगित्वम्. पूर्वन्तु अतीतत्वं न अनुभूतम्. यदा देवदत्तविषयको अनुभवः पूर्वं जातः तस्मिन् काले अतीतत्वस्य अनुभवो नास्ति. इदानीं स्मरणेतु अतीतत्वस्य विषयीकरणं वर्तते. अतीतत्वं संस्कारेण कथम् उपस्थापयितुं शक्यते? अतीतत्वं तावत् अननुभूतं कथं वा स्मरणेन विषयीकर्तुं शक्यते? संस्कारस्य तत्र कथं सामर्थ्यम्? इति कश्चित् प्रश्नो भवति. परन्तु मनः करणं, संस्कारो व्यापारः इति यदा उच्यते तदानीं नास्ति दोषः. संस्कारस्य अननुभूत-विषयोपस्थापकत्वं तावत् प्रत्यभिज्ञायां दृश्यते. संस्कार-सन्निकर्षाभ्यां जायमानं ज्ञानं 'प्रत्यक्षम्' उच्यते. तत्र संस्कारोऽपि कारणम्. तत्र अतीतत्वांशो यः प्रत्यभिज्ञायां विषयीक्रियते सच अतीतत्वांशः संस्कारबलात् उपस्थाप्यते. ततश्च संस्कारस्य अननुभूत-विषयोपस्थापकत्वं सर्वेणापि प्रत्यभिज्ञाविषये अंगीकृतं वर्तते. एवं स्मरणस्थलेऽपि अननुभूतस्यापि अतीतत्वस्य विषयीकरणं संस्कारवशाद् भवति. संस्कारस्य तादृशं सामर्थ्यं सर्वैरपि अंगीकर्तव्यं भवति. इति हेतोः तत्र मनः करणं, संस्कारः व्यापारः, स्मृतिश्च फलम्. एवं स्मरणम् असाधारणं फलं भवति मनसः. तस्मात्,

मनसः इन्द्रियत्वं वर्तते इति हेतोः स्मरणं मानसप्रत्यक्षम्. तस्य प्रत्यक्षभिन्नत्वं कथमपि वक्तुं न शक्यते इति द्वैतदर्शने प्रतिपाद्यते.

एतस्मिन् दर्शने साक्षिरूपम् इन्द्रियं स्वीकृतं वर्तते. आत्मस्वरूपम् इन्द्रियं 'साक्षी' इति उच्यते. अत्रतु अयं विशेषः. 'साक्षी' इति शब्दः इन्द्रियेऽपि प्रयुज्यते, फलेऽपि प्रयुज्यते. अत्र आत्मा तावत् फलरूपोऽपि. साक्षिज्ञानस्वरूपम् अस्ति तथा इन्द्रियस्वरूपमपि, उभयमपि आत्मस्वरूपमेव. साक्षिरूपस्य ज्ञानस्य आत्मस्वरूपं विषयः, आत्मधर्माः सुख-दुःखादयः ये भवन्ति तेऽपि विषयाः, एवं आकाशः, कालः, मनः, मनोवृत्तयः, एते सर्वेऽपि साक्षिविषयाः एतस्मिन् दर्शने स्वीक्रियन्ते.

गोस्वामिचरणैः यदा विषयनिरूपणं कृतं तत्र मया श्रुतं यत् सुषुप्तिकाले चित्तं जाग्रतं भवति. अन्तःकरणस्य प्रभेदेषु अन्यतमद् भवति चित्तम्. चित्तस्य जाग्रत्त्वं स्वीक्रियते. चित्तेन तावद् आत्मनो अनुभवो वर्तते इति. किन्तु द्वैतदर्शने, अद्वैतदर्शने, विशिष्टाद्वैतदर्शने अपि मनः सर्वथा सुषुप्तौ उपरतं भवति. मनसो जाग्रत्त्वं सुषुप्तिकाले कथमपि नास्ति.

नैयायिकाः वदन्ति, सुषुप्तिकाले ज्ञानमेव नास्ति इति. तत्र दुःखाभावो वर्तते. दुःखाभावस्य अनुभवोऽपि नास्ति. कुतः? किमपि करणं तत्र नास्ति. करणानि भवन्ति षट्, बाह्येन्द्रियाणि अन्तरिन्द्रियं च. सर्वाण्यपि करणानि सुषुप्तिकाले उपरतानि सन्ति. एवञ्च ज्ञानसाधनं किमपि नास्ति. तस्मात् सुषुप्तिकाले ज्ञानमेव नास्ति इति.

अद्वैतवेदान्तिनस्तु स्वापकाले आनन्दस्य अनुभवो वर्तते. अयञ्च आनन्दः आत्मस्वरूपभूत इति स्वीकुर्वन्ति. यतोहि ''एतावन्तं कालं सुखम् अहम् अस्वाप्सम्'' इत्येवम् औत्तरकालीनः परामर्शो भवति तस्मात् कारणात् सुखस्य अनुभवो अवश्यं स्वीकर्तव्यः सुषुप्तिकाले. सुखस्य अनुभवः केन वा करणेन भवति? मनः तथा सर्वविधं करणं तदानीम् उपरतं वर्तते.

तदानीम् आत्मा वर्तते. आत्माच स्वप्रकाश:, आत्मस्वरूपं, साक्षिरूपं ज्ञानं आत्मस्वरूपभूतं सुखं विषयीकरोति. सुखानुभव: चैतन्यात्मक: वर्तते इति वेदान्तिनां मतम्.

**प्रद्योतकुमार :** सुषुप्तिकाले यत् सुखं प्रकाशितं भवति तत्सुखं ...

**डी.प्रह्लादाचार :** न वैषयिकं सुखम्.

**प्रद्योतकुमार :** न. आनन्दस्वरूपं नतु वृत्तिरूपम् ?

**डी.प्रह्लादाचार :** नैव. सुखं द्विविधम्. १. मन:परिणामभूतं सुखम् एकम्. एतदेव वृत्तिरूपं सुखम् उच्यते. २. आत्मस्वरूपभूतम् अपरम्. चैतन्यस्वरूपभूतं सुखन्तु सुषुप्तिकाले अनुभूयते. साक्षिरूपस्य ज्ञानस्य अथवा साक्षिरूपस्य इन्द्रियस्य अनेके विषया: भवन्ति. काल: विषय:. "इदानीम् इदम् अस्ति, इदं नास्ति" इति वयं वदाम:. 'इदानीम्' इति कालानुभवो वर्तते. अयञ्च कालानुभवो न अनुमानजन्य:. लिंगपरामर्श: इदानीं नास्ति, शब्द: च नास्ति, उपमानस्य कालविषये प्रसक्तिरेव नास्ति. तथाच प्रत्यक्षानुभव: कालस्य विषये वक्तव्य:. बाह्यानाम् इन्द्रियाणां अन्त:करणस्य च तत्र प्रवेशो नास्ति. किन्तु साक्षिण:.

एवम् आकाशोऽपि साक्षिविषय:. अन्धकारे अस्माभि: हस्तप्रसारणं क्रियते. तदानीम् अस्माकम् अयं विश्वास: "अस्ति अत्र आकाश:" इति. आकाशो वर्ततइति सिद्धवत्कृत्य हस्तप्रसारणं कुर्म:. नहि अस्माभि: आकाशो अत्र वर्तते इति केनापि अनुमानेन ज्ञात्वा तदनन्तरं हस्तप्रसार: क्रियते. स्वयं हस्तप्रसार: क्रियते खलु. तस्मात् आकाशोऽपि साक्षिविषय: इति सर्वै: अंगीकर्तव्यं भवति.

मनोरूपम् इन्द्रियं साक्षिविषय:. इतरेषाम् इन्द्रियाणां साक्षिविषयत्वं न उच्यते. बाह्येन्द्रियाणां साक्षिविषयत्वं नास्ति. "मम मन: एवं वदति" इति वदाम:. तत्र मदीयं मन: मया अनुभूयते, सुख-दु:खादिमनोवृत्तय: या: भवन्ति तासाम् अनुभवो मम भवत्येव. एवम् एतत् सर्वमपि साक्षिणा

गृह्यते. साक्षिरूपम् इन्द्रियं, साक्षिरूपं ज्ञानं च यदि न स्वीक्रियेते तर्हि आकाशस्य ज्ञानं न स्यात्. अन्तःकरणस्य मनसः आकाशविषये सामर्थ्याभावात्. आकाशो बाह्यः पदार्थः, मनस्तु अन्तरिन्द्रियम्. अन्तःकरणस्य बाह्यार्थे साक्षात् सम्बन्धः केनापि न अंगीकृतः. तथाच कालाकाशादीनाम् अनुभवः कथं भवति इति वक्तुं न शक्यते. एवं सुषुप्तिकाले सुखस्य अनुभवः कथं भवति इति वक्तुं न शक्यते इति हेतोः साक्षिरूपम् इन्द्रियम् अवश्यम् अंगीकार्यम्. अतः इन्द्रियं सप्तविधम् इति एतन्मते स्वीक्रियते.

प्रत्यक्षं तावत् निर्विकल्पकं सविकल्पकम् इति द्विविधं नास्ति. सर्वं ज्ञानं सविकल्पकमेव. शिशोः यज् ज्ञानं भवति तदपि ज्ञानं सविकल्पकमेव. भवन्तः सर्वे वदेयुः कथम् इदमिति. शिशोः यज् ज्ञानं भवति तत् निर्विकल्पकमेव स्याद् इति. परन्तु किमपि प्रमाणं तत्र वक्तव्यम्. शिशोः अनुभवो न मम अनुभवो भवति. भवद्भिः पृच्छ्येत : शिशोः सविकल्पकं ज्ञानम् अस्ति इत्यत्रापि किं प्रमाणम्? इति. परन्तु अस्माकम् अनुभवः परिशील्यतां नाम, अनन्तरं शिशोः अनुभवः परिशीलयितुं शक्येत.

**विन्ध्येश्वरीप्रसाद :** ... किञ्चिद् इति ज्ञानं जायते ...
**डी.प्रह्लादाचार :** तर्हि किञ्चित्वप्रकारकं ज्ञानं भवति.
**विन्ध्येश्वरीप्रसाद :** ...विकल्प...
**डी.प्रह्लादाचार :** 'विकल्पो' नाम प्रकारः. ''इदं किञ्चिद्'' इत्यत्र किञ्चित्वेन रूपेण ज्ञातं वर्तते. सर्वथा निष्प्रकारकं वस्तुमात्रग्राहकम् ज्ञानं असम्भावितं भवति. अपिच इन्द्रियस्य वस्तुना यदा सन्निकर्षः भवति तदा नैके पदार्थाः भासन्ते इति अवश्यम् अभ्युपगन्तव्यम्. घटो अस्ति, घटे रूपं वर्तते, रूपघटयोः यः समवायः, समवायस्य ऐन्द्रियकत्वं ये अभ्युपगच्छन्ति तन्मते, एते त्रयोऽपि इन्द्रिययोग्याः सन्ति, इन्द्रियेण तेषां सन्निकर्षो भवति. सतिच एवं वस्तुत्रयविषयकं निर्विकल्पकं ज्ञानं जातम् इति वक्तव्यम्. वस्तुत्रयं कुतः? घटत्वं घटः, रूपत्वं रूपम्, समवायत्वं समवायः एवं न्यूनातिन्यूनतया षट्पदार्थविषयकं प्रत्यक्षं जायते इति अवश्यं

स्वीकर्तव्यं भवति.

नैयायिकाः वदेयुः : तेषां मध्ये परस्परं सम्बन्धस्तु न अस्माभिः अवगतः, पृथक्तया सर्वेऽपि पदार्थाः गृहीताः. तेषां परस्परसम्बन्धस्तु न गृहीतः इति. तत्र किं कारणम्? इति वक्तव्यम्. नैयायिकैः विशिष्टज्ञानं प्रति विशेषणज्ञानं कारणम् इति कार्यकारणभावं सिद्धवत्कृत्य "रूपी घटः" "अयं घटः" इत्यादिज्ञानं विशिष्टज्ञानं भवति. विशिष्टज्ञानस्य च विशेषणज्ञानजन्यत्वनियमात्, विशेषणज्ञानं पूर्वम् अंगीकर्तव्यम्. विशेषणज्ञान-स्यापि सविकल्पकत्वे तस्यापि विशेषणज्ञानजन्यत्वम् इति अनवस्था स्यात्. अनवस्थापरिहारार्थं निर्विकल्पकज्ञानम् अंगीकरणीयं भवति. विशेषणज्ञानं च निर्विकल्पकम् इति उच्यते. परन्तु अस्मिन् नियमे किं प्रमाणम्? इति पृच्छ्यते. विशिष्टज्ञानं प्रति विशेषणज्ञानं कारणं कुतः? सर्वं ज्ञानं विशषेणज्ञानजन्यम् इति नैयायिकेनापि वक्तुं न शक्यते. स्मरणात्मकं ज्ञानं निर्विकल्पकज्ञानं किमपि जायते, तदनन्तरं सविकल्पकज्ञानं स्मरणात्मकं उत्पद्यते इति केनापि वक्तुं शक्यते किम्? स्मरणविषये नास्ति. ...

**प्रद्योतकुमार :** निर्विकल्पकस्मरणमपि सम्प्रदायविशेषे अंगीकृतम् अस्ति.

**डी.प्रह्लादाचार :** एवम्. गदाधरभट्टाचार्येणापि. तत्र स्मरणस्य तावत् सविकल्पकत्वमेव अंगीकृतम्. एवञ्च यज् ज्ञानं विशिष्टं ज्ञानं तत् सर्वं विशेषणज्ञानजन्यम् इति नियमः त्यक्तः.

**प्रद्योतकुमार :** अभावप्रत्यक्षे निर्विकल्पकजन्यत्वं नास्ति.

**डी.प्रह्लादाचार :** अभावज्ञानं प्रति प्रतियोगिज्ञानं कारणं भवति. तत्र प्रतियोगि विशेषणम् अस्ति. एवञ्च अभावज्ञानं विशिष्टज्ञानं सत् विशेषणज्ञानजन्यम्. अभावप्रत्यक्षविषये विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वं सिद्धम् अस्ति. यद् विशेषयोः कार्यकारणभावः तत्सामान्ययोः कार्यकारणभावः इति न्यायानुसारेण सर्वस्यापि ज्ञानस्य विशेषणज्ञानजन्यत्वम् स्वीकरणीयम् इति नैयायिकाः वदन्ति. परन्तु यदि यद्विशेषयोः कार्यकारणभावः तत्सामान्ययोः

कार्यकारणभाव: इति नियम: स्वीक्रियते तर्हि सर्वस्यापि ज्ञानस्य विशेष्यज्ञानजन्यत्वमपि स्वीकर्तव्यं भवति. यतोहि अनुमितिस्थले ''पर्वतो वह्निमान्'' इति अनुमिति: विशिष्टज्ञानम् अस्ति. इदञ्च विशिष्टज्ञानम् अनुमित्यात्मकं कदा भवति? पर्वतस्य विशेष्यस्य ज्ञानं पूर्वं वर्तते चेत्. पर्वतस्य ज्ञानं, विशेष्यस्य पक्षस्य ज्ञानं नास्ति चेत् अनुमिति: न उत्पद्यते. एवञ्च अनुमितिस्थले विशिष्टज्ञानं विशेष्यज्ञानजन्यं वर्तते. यदि विशेषयो: कार्यकारणभाव: इति न्याय: सर्वत्र अनुम्रियते चेत् तर्हि सर्वं ज्ञानं विशेष्यज्ञानजन्यमपि स्वीकरणीयं भवति. एवञ्च अनुमितिस्थले विशिष्टज्ञानस्य विशेष्यज्ञानजन्यत्वदर्शनेऽपि सर्वस्यापि ज्ञानस्य विशेष्यज्ञानजन्यत्वं यथा न स्वीक्रियते तथा अभावज्ञानस्थले अभावज्ञानं प्रति विशेषणज्ञानस्य कारणत्वेन अंगीकृतत्वेऽपि सर्वत्र विशेषणज्ञानस्य कारणत्वं न स्वीकर्तव्यम्. अपिच अस्ति तादृशं विशिष्टं ज्ञानं यद् विशेषणज्ञानजन्यं न भवति, यथा स्मरणात्मकम् , एवञ्च अनेकशो व्यभिचार: दृश्यते इति हेतो: अयं नियमएव अप्रामाणिक:. यं नियमम् आधारीकृत्य अनेकै: दार्शनिकै:, विशेषतो बौद्धै:, नैयायिकैः च निर्विकल्पकं ज्ञानं किमपि समर्थयितुं प्रयत्न: क्रियते.



# चर्चा

## द्वैतदर्शने प्रत्यक्षस्वरूपम्

प्रो. डी. प्रह्लादाचार

वी. एन्. झा : प्रमातृस्वरूपम् इन्द्रियत्वेन स्वीकृतम्. तर्हि कर्तृकरणयोः ऐक्यम्...

**डी.प्रह्लादाचार :** तत्तु सत्यम्. अत्र अयं प्रश्नः. प्रमाता चेतनः साक्षिरूपी इन्द्रियात्मकः इति उच्यते. तत्र भवद्भिः अयं प्रश्नः करणीयः. कर्तृ-करण-फलानां ... कर्तृकरणयोः अभेदः स्वीक्रियते इति. परन्तु अत्र अयं विशेषः. चेतनस्य, साक्षिणः इन्द्रियत्वं यदा उच्यते तदा सः स्वभिन्नं ज्ञानम् उत्पादयति इति न अर्थः. यथा चक्षुः स्वभिन्नं ज्ञानम् उत्पादयति तथा अत्र साक्षिरूपः चेतनः स्वभिन्नं ज्ञानम् न उत्पादयति किन्तु स्वात्मानमेव विषयसम्बद्धतया अभिव्यनक्ति इति हेतोः इन्द्रियत्वेन व्यवहारः क्रियते.

**गो. श्या. म. :** "उद्धरेद् आत्मना आत्मानम्" आत्मना आत्मानम् उद्धरेत्. कर्तृ-करणयोः ऐक्यम्.

**प्रद्योतकुमार :** अद्वैतवेदान्ते साक्षिज्ञानं स्वीकृतम्. The reason why they admit Sākṣi Pratyakṣa is this that they admit perception of pleasure etc. But at the same time they find Manas is not an Indriya. And therefore, to account for it they have to admit a separate type of Pratyakṣa. That is there position. The idea is this that here 'Pratyakṣa' is used in the same sense Vṛttijñāna. In the Vṛttijñāna what happens is this that Viṣayākar Vṛtti is necessary for any

pratyakṣa may be possible whether सुखविषयकः घटविषयकः, विषयाकारवृत्तिः is necessary. But since in the case of Sukha-Duḥkha etc. such Antaḥkaraṇa--Vṛtti is not possible, they admit Avidyā Vṛtti. अविद्यावृत्तिसहायेन यस्य विषयस्य प्रत्यक्षं तत् साक्षिप्रत्यक्षम्. तत्र साक्षिस्वरूपं नतु इन्द्रियं, तत्तु चैतन्यमेव! किञ्चिदुपाधि-विशष्टतया तस्य साक्षित्वेन व्यवहारः. परन्तु अत्र सुखदुःखादीनां यज् ज्ञानं तत् प्रमातृरूपसाक्षिरूपेन्द्रियेण जन्यते. तस्य किं स्वरूपम्? वृत्तिरूपं ज्ञानं तत्?

**डी.प्रह्लादाचार :** अद्वैतसिद्धान्ते साक्षिरूपं ज्ञानम् अंगीक्रियते. भवद्भिः उक्तरीत्या अविद्यावृत्तिप्रतिबिम्बितं चैतन्यं साक्षि इति अंगीक्रियते. सुख-दुःखादिकं न बाह्यम् अन्तरा भवति. मनःपरिणामभूता एव तस्मिन्नपि मते. परन्तु तत्र शुद्धस्य चेतनस्य विषयग्राहकत्वं न अंगीक्रियते. शुद्धः चेतनः स्वप्रकाशो अंगीक्रियते. स्वप्रकाशः इत्यस्यापि प्रमाणान्तरेण अवेद्यः इति, अद्वैतदर्शने इदं विवरणं दीयते. परन्तु शुद्धस्य चेतनस्य सुखादिग्राहकत्वं नास्ति. यदा वृत्तिसम्बन्धं प्राप्नोति तदानीमेव सः चेतनः विषयं ग्रहीतुं प्रभवति. अतएव अविद्यावृत्ति-प्रतिबिम्बितं चैतन्यं साक्षिरूपं स्वीकृत्य एतस्य साक्षिणो विषयाः भवन्ति सुख-दुःखादयः इति ते निरूपयन्ति.

**प्रद्योतकुमार :** तत्र साक्षिग्राहकं ...

**डी.प्रह्लादाचार :** साक्षि तावत् चेतनस्वरूपं ज्ञानम्.

**प्रद्योतकुमार :** विषयि, नतु इन्द्रिय...

**डी.प्रह्लादाचार :** इन्द्रियत्वं तैः न उक्तम्.

**प्रद्योत कुमार :** अनयोः मध्ये श्रेयस्करः पक्षः कः?

**डी.प्रह्लादाचार :** द्वैतमतेतु साक्षिरूपं ज्ञानं स्वीकृतम्. यथा अद्वैतमते साक्षिरूपं ज्ञानं चेतनस्वरूपं ज्ञानम् अस्ति तद्वदेव साक्षिरूपं चेतनात्मकं ज्ञानं स्वीकृतम् अस्ति. एतस्मिन् अंशे अनयोः

साम्यं भवति. अन्येषु बहुषु विषयेषु वैलक्षण्यम् भवति. अद्वैतसिद्धान्ते साक्षिरूपं ज्ञानम् अयथार्थमपि भवितुम् अर्हति. यतोहि शुक्तिरजतज्ञानं यदा भवति...

**प्रद्योतकुमार :** श्रुतयोऽपि न प्रमा!

**डी.प्रह्लादाचार :** शुक्तिरजतज्ञानं यदा जायते तच्च ज्ञानं साक्षिरूपं ज्ञानमेव. तत्र अविद्यापरिणामो वर्तते. शुक्तिरजतम् अविद्यापरिणामः. तद्विषयीकारित्वं स्वीक्रियते. एवञ्च शुक्तिरजतज्ञानं यद् भ्रान्तिरूपं ज्ञानं तत् साक्षिरूपं भवति.

द्वैतदर्शने साक्षिरूपं ज्ञानं नियमेन यथार्थम्. इदं ज्ञानम् अयथार्थं कदापि न अनुभूयते. अस्माकम् "अहम् अस्मि न वा?" इति संशयो वा "अहं न अस्मि" इति विपरीतनिश्चयो वा नास्ति. यदा "मयि सुखं दुःखं वा नास्ति तदानीम् अहं सुखी अहं दुःखी" इति अनुभवो नास्ति. यदा सुखम् अस्ति तदानीमेव "अहं सुखी" इति ज्ञानम्. यदा दुःखम् अस्ति तदानीमेव "अहं दुःखी" इति ज्ञानम्. एवं साक्षिणा यद्यद् गृह्यते तत् सर्वदा सत्यमेव भवति.

**गो. श्या. म. :** Synthetic a priori.

**डी.प्रह्लादाचार :** साक्षिरूपं ज्ञानं कदापि अयथार्थं न भवति. इदं किञ्चिद् वैलक्षण्यम्. भवतां प्रश्नस्तु भवति, साक्षिणः इन्द्रियत्वं कुतः? साक्षिरूपं ज्ञानं स्वीक्रियतां, यथा अद्वैतदर्शने, अत्र साक्षिणः इन्द्रियत्वं कुतः? इति. यद्यपि साक्षी एकएव. इन्द्रियभिन्नं साक्षिरूपं ज्ञानम् अत्र नास्ति. साक्षिचेतनस्तु वर्तते इदानीमपि. सच चेतनो विषयान् अभिव्यनक्ति. चेतनरूपं ज्ञानं नैव जायते. तच्च ज्ञानं नित्यं परन्तु विषयाभिव्यञ्जकत्वं तावत् विशेषतो भवति. पूर्वं विषयाभिव्यञ्जकत्वं यन् न आसीत् तद् इदानीं जातम्. तत्र किं करणम्? स्वयमेव.

**प्रद्योतकुमार :** आवरणभंगम्.

**डी.प्रह्लादाचार :** किमपि उच्यताम्. परन्तु विषयाभिव्यञ्जकत्वं यत् पूर्वं न आसीत् चेतनरूपस्य ज्ञानस्य ... ज्ञानन्तु आसीत्. परन्तु तत्र विषयाभिव्यञ्जकत्वम् इति कश्चन विशेषः कोऽपि जातः.

**प्रद्योतकुमार :** विषय... आवरकत्वं नास्ति.

**डी.प्रह्लादाचार :** तत्र किमपि अन्यत् करणं नास्ति, स्वयमेव विषयाभिव्यञ्जकमपि भवति इति हेतोः तस्यैव इन्द्रियत्वेनापि व्यवहारः क्रियते.

**विन्ध्येश्वरीप्रसाद :** ''इन्द्रो मायाभिः पुरुरूप ईयते'' इति दृष्ट्या इन्द्रियं नैव इन्द्रएव.

**डी.प्रह्लादाचार :** तद् अस्तु. तत्तु अन्यया रीत्यापि वक्तुं शक्यते. तत्र इन्द्रत्वं नाम महासामर्थ्यशालित्वं यत्किमपि तद् भवतु नाम. अत्र तावत् साक्षिरूपं यज् ज्ञानं वर्तते ... 'ज्ञानं' नाम विषयाभिव्यक्तिः ...

**प्रद्योतकुमार :** सुषुप्तिकाले यत् सुखं प्रकाशितं भवति तच्च चैतन्यस्वरूपमेव इति चेत् तस्य स्वप्रकाशत्वम्. तत्प्रकाशार्थं कथम् इन्द्रियं स्वीकार्यम् ?

**डी.प्रह्लादाचार :** जाग्रत्कालेऽपि सएव चेतनो अस्ति. स्वापकाले यत् सुखम् अनुभूयते तत् सुखं जाग्रत्काले न अनुभूयते. जाग्रत्काले अनुभूयमानं सुखं हि दुःखमिश्रितं भवति. तत्तु जडभूतं सुखम्. अन्तःकरणपरिणामभूतं वृत्तिरूपं सुखं तत्. चैतन्यात्मकं यत् सुखं ... दुःखामिश्रितं सुखं वर्तते ...

**वी. एन्. झा :** ... ज्ञानजन्यम्...

**डी.प्रह्लादाचार :** तद् अभिव्यक्तिमात्रम्. सर्वत्रापि अभिव्यक्तिरेव तत्र.

**प्रद्योतकुमार :** तत्तु स्वप्रकाशम् ?

**डी.प्रह्लादाचार :** स्वप्रकाशं नाम ... अभिव्यक्तिस्तु जाता. पूर्वम् अभिव्यक्तिः न असीत्, इदानीम् अभिव्यक्तिः अभूत्.

**प्रद्योतकुमार** : सुषुप्तिरेव तत्र सहकारिणी ?

**डी.प्रह्लादाचार** : सुषुप्तिः नाम अवस्थाविशेषः. तस्याम् अवस्थायाम् अभिव्यक्तिः जाता. तादृशाभिव्यक्तेः स्वयमेव तत्र का...

**प्रद्योतकुमार** : तदवस्थाविशेषे यत् सुखस्य प्रकाशो अस्ति तत्र इन्द्रियस्य किं कार्यम् ?

**डी.प्रह्लादाचार** : इन्द्रियं किमपि अन्यत् नास्ति.

**अच्युतानन्द दास** : तत्र एका शंका. यदि साक्षिरूपस्य चैतन्यस्य इन्द्रियत्वं स्वीकुर्वन्ति तर्हि सामान्यतः "इन्द्रियम् अतीन्द्रियम्" इति उच्यते. आत्मनस्तु साक्षात्कारो भवत्येव. तथा सति पुनः इन्द्रियस्य लक्षणं किञ्चित् अन्यया रीत्या वक्तव्यं भविष्यति किल ? साक्षिरूपं यद् आत्मचैतन्यं वर्तते ... साक्षिणः इन्द्रियत्वे स्वीकृते सति इन्द्रियम् अतीन्द्रियम् इति कथा कदाचित् अपास्ता भविष्यति. यतः साक्षिणः ...

**डी.प्रह्लादाचार** : इन्द्रियम् अतीन्द्रियं नाम बाह्येन्द्रियाणां वा मनसो वा अविषयः इति अर्थः. मनस्तु इन्द्रियम् एतस्मिन् अर्थे अतीन्द्रियम्. किन्तु मनः साक्षिविषयम् इति मया प्राग् ... नैयायिकमते भवतु नाम. तत्र नैयायिकान् प्रति ऐन्द्रियकत्वं मनसः साध... एतस्मिन् दर्शने ...

**बलिराम शुक्ल** : तेषाम् आशयः इदं भवति, तत्र इन्द्रियत्वं नाम किम् ? :

**डी.प्रह्लादाचार** : इन्द्रियत्वं प्रत्यक्षात्मकज्ञानकरणत्वम्.

**बलिराम शुक्ल** : तद् यत्र कुत्रापि वर्तते तत्र सर्वत्रापि इन्द्रियत्वम्.

**डी.प्रह्लादाचार** : एवम्.

**बलिराम शुक्ल** : तर्हि विषयस्यापि इन्द्रियत्वापत्तिः भविष्यति.

**डी.प्रह्लादाचार** : तत्तु वर्तते. तथापि सर्वेष्वपि मतेषु योऽपि अयं विषयः चर्चितः तत्र सन्निकर्षः तावत् प्रत्यक्षम् इति उच्यते. प्रत्यक्षम् अक्षस्य यथा अर्थसन्निकर्षो भवति, अर्थस्यापि अक्षसन्निकर्षो वर्तते. एवञ्चेत् 'प्रत्यक्षं' ज्ञानम् इति कुतः ? 'प्रत्यर्थं' ज्ञानम्

इति व्यवहारः स्यात्. ...इति तैः शास्त्रिभिः उक्तम्. तत्र अक्षस्य करणत्वात् करणस्य प्राधान्यं स्वीकृत्य खलु व्यपदेशः स्वीक्रियते.

**प्रद्योतकुमार :** भवतो अभिप्रायः एवम् आसीत् यद् विशिष्टज्ञानं विशेषणज्ञानपूर्वकम् इति नियमे का युक्तिः? नास्ति युक्तिः तत्र. कथम्? यदा विशेषणज्ञानपूर्वकं विशिष्टज्ञानम्, अनुमिति शब्दोऽपि that rule will be applied. But in that case you have not done distinction between ... if I say in case of Anumiti, Śabda all these cognitions are necessarily, नियमतो विशिष्टवैशिष्ट्यावगाही नतु विशिष्टज्ञानम्.

**डी.प्रह्लादाचार :** विशिष्टवैशिष्ट्यज्ञानं विशिष्टज्ञानमपि भवति. विशिष्टवैशिष्ट्यज्ञानं विशेषणतावच्छेदक-प्रकारकज्ञानजन्यं विशिष्टज्ञानं विशेषणज्ञानजन्यम् इति एवम् उच्यते. शाब्दरूपं ज्ञानम् अनुमित्यात्मकं ज्ञानं विशिष्टवैशिष्ट्यावगाहिज्ञानं भवति. प्रत्यक्षमपि तथैव. यथा "घटो रूपी" इति प्रत्यक्षं जायते तदानीं रूपत्वविशिष्ट-रूपवैशिष्ट्यावगाही इदं ज्ञानं भवति. अयं घटः इति ज्ञानन्तु घटत्वविशिष्टज्ञानं यदि घटत्वस्य स्वरूपतो भानम् अंगीक्रियते. "दण्डी पुरुषः" इत्यादौ तावत् विशिष्टवैशिष्ट्यावगाही ज्ञानं ...

**( अत्र सहसा विद्युत्प्रवाहोपरोधाद् ध्वनिमुद्रणभंगः )**

# Perceprion : Sāṅkhya and Śuddhādvaitic Views

Dr. Sunanda Y. Shastri

In the field of epistemology, perception as means of valid knowledge has been unanimously accepted by the systems of thought as an important one. Sāṅkhya system has accepted three means of valid knowledge i.e. perception, inference and testimony.

दृष्टम् अनुमानम् आप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणम् इष्टं प्रमेयसिद्धिः प्रमाणाद् हि ॥
( सांख्यकारिका ४ )

Sāṅkhyas do not accept the other means of valid knowledge like comparison( उपमान ), assumption ( अर्थापत्ति ), non-apprehension( अनुपलब्धि ), ( ऐतिह्य ) tradition, intuition ( प्रतिभा ) etc. All these other valid means of knowledge can be reduced to either perception, inference or testimony. Anything that can be known must be demonstrably established in relation with one of these means of valid knowledge.

Sāṅkhya Sūtra "तत्सिद्धौ सर्वसिद्धेः नाधिक्यसिद्धिः" (I.88) emphasizes that there should be only three Pramāṇas. While commenting on this Sūtra Vijñānabhikṣu (सांख्यप्रवचनभाष्य १।८८ ) explains that

for the accomplishment of all purposes perception, inference and testimony alone are enough. Accepting additional Pramāṇas is unnecessary. त्रिविधप्रमाणसिद्धौ च सर्वस्य अर्थस्य सिद्धेः न प्रमाणाधिक्यं सिध्यति, गौरवाद् इति अर्थः. In this regard Vijñānabhikṣu quotes Manu :

प्रत्यक्षम् अनुमानं च शास्त्रं च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिम् अभीप्सता॥

(XII.105)

"One who desires purity in the path of righteousness should resort to these three means of valid knowledge viz. perception, inference and scriptures".

Sāṅkhyakārikā places perceprtion in the first place in Kārikā 4 and on it Māthārācārya says: "यथा श्रोत्रादीनां शब्दादयः पञ्चेन्द्रियार्थाः पञ्चानां दृष्टं प्रमाणम्. प्रथमम् इदं मुख्यं सफलप्रमाणानाम्". Perception is caused by sense capacities. Perception is the principle instrument of knowledge and is hence stated first. Vācaspati states three reasons why perception has to be considered first of all the means of valid knowledge viz. 1. Perception occurs in time before the other means of valid knowledge such as inference etc. 2. the other means of valid knowledge dependent on perception and 3. every system of philosophy accords first place to perception. Sānkhyakārikā has given word 'दृष्टम्' for perception and Māṭharācārya has explained what 'दृष्टम्' means in the Kārikā. It says 'दृष्टम्' is synonym of 'प्रत्यक्ष'=perception. "दृष्टम् इति प्रत्यक्षपर्यायः. अक्षम्

इन्द्रियं प्रतीत्य यद् उत्पद्यते ज्ञानं तत् प्रत्यक्षं दृष्टम् उच्यते''. The knowledge which arises through sense object contact is called perception.

Definition of perception put forth by Sāṅkhyakārikā is ''प्रतिविषयाध्यवसायो दृष्टम्''. Perception is The reflective discerning (अध्यवसाय) that rises through sense-contact with the particular object of sensing. (सां.का.४). अध्यवसाय Could be understood as belief or discrimination. Māṭharācārya explains the 'अध्यवसाय' as, the knowledge obtained through eye etc., five sense organs - object contact i.e. ''विषयं विषयं प्रति यो अध्यवसायो नेत्राणाम् इन्द्रियाणां पञ्चानां रूपादिषु पञ्चसु तत् प्रत्यक्षं प्रतिपत्तिरूपं दृष्टाख्यम्''. Vācaspati defines perception as ''reflective discerning'' as belief (निश्चय) as opposed to doubt or vacillation (संशय). Vijñānabhikṣu's definition is not far from the above definition. Commenting on Sāṅkhyasūtra, ''यत्सम्बद्धं सत् तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम्'' (सांख्यप्रवचनसूत्र I.89). Vijñānabhikṣu says, when connected with the object, the (बुद्धिवृत्ति) modifications of mind take the form of that object, that is perception. ''सम्बद्धं भवत् सम्बद्धवस्त्वाकारधारि भवति यद् विज्ञानं बुद्धिवृत्तिः तत् प्रत्यक्षं प्रमाणम् इति अर्थः'' (सांख्यप्रवचनसूत्रभाष्य I.89). This clearly signifies that for the accomplishment of perception unhindered sense object contact is necessary.

Process of perception according Sāṅkhyas is more or less understood from their definition of perception. Sāṅkhyakārikā does not clarify the process of perception. It simply says 'दृष्टम्' and defines, ''प्रतिविषयाध्यवसायो दृष्टम्'' from which one understands only that five sense organs perceive sense objects.

Vācaspatimiśra has elaborately described the process of perception, that is, "Perception is the reflective discerning (अध्यवसाय) that arises through the direct contact (सन्निकर्ष) between a sense-capacity (इन्द्रिय) and a real object to be known (प्रमेय)such as earth, pleasure etc". Such reflective discerning, which is on operation of intellect, is one important kind of awareness, and this kind of awareness arises when the intellect is in its Sattva modality has been subverted. When there is such contact between a sense capacity and an object with the resulting awareness taking place in intellect, the condition is also known as an operation (वृत्ति). Awareness, operation and intellect, it should be noted are manifestations of materiality, and thus are devoid of consciousness. Nevertheless, the intellect casts a kind of shadow of perhaps better, becomes a reflection (प्रतिबिम्ब) in the pure medium of consciousness so that it appears as if it were consciousness. By the same token the images that manifest themselves in consciousness appear to characterize the nature of consciousness. Finally, it should be noted that the description of perception as direct contact with specific object excludes doubt, misconception, inference and memory (Encyclopaedia of Indian Philosophies, vol.IV Sankhya,p.303). Sāṅkhyapravacanabhāṣya's definition leads us to understand the process more clearly, i.e. modification of mind/intellect take form of outer object.

The process by which a means of valid knowledge works in this— first intellect assumes the form is reflected as an

image in consciousness. Since consciousness can not be modified, his reflection can only be an image. "इन्द्रियप्रणालिकया अर्थसन्निकर्षेण लिंगज्ञानादिना आदौ बुद्धेः अर्थाकारा वृत्तिः जायते" ( सांख्य.प्र.भाष्य I.87).

The Yoga school calls the process of awareness as 'चित्तवृत्ति' instead of 'बुद्धिवृत्ति' or 'अन्तःकरणवृत्ति' Vyāsabhāṣha on Pātañjala Sūtra defines the process of perception as the modification of the mind being connected with an outside object through the channel of sense organs and making that object its own. Mainly comprehends the special nature of the object which has general and special characteristics is the source of correct knowledge called 'perception'. The result of perception is the knowledge of modification of the mind as belonging to the Puruṣa (self) which is identical with the modifications of mind. Puruṣa is conscious by reflection.

> "इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषयः सामान्यविशेषात्मनो अर्थविशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम्. फलम् अविशिष्टः पौरुषेयः चित्तवृत्तिबोधः. बुद्धेः प्रतिसंवेदी पुरुषः इति"
> ( पातं.सू.समा.पा.७.व्यासभा. )

Vijñānabhikṣu explains Vyāsabhāsya even more perfectly. He says: "The senses are themselves the channels i.e. the path through which the mind travels, combining with them and through their parts, the mind affected by the outside objects, becomes one with the objects, only with the help of the senses. The mind alone does not become one with

the object, just as, when the conch is seen yellow, it is the presence or absence of bile in the eyes, which is its cause. Therefore, in seeing colour and so on, the eyes etc. also is mentioned as 'cause' in the Śāstras and not the mind alone.

> "इन्द्रियाण्येव नाडी-चित्तसञ्चरणमार्गाः, तैः संयुज्य तद्गोलकद्वारा बाह्यवस्तुषु उपरक्तस्य चित्तसेन्द्रियसाहित्येनैव अर्थाकारः परिणामो भवति न केवलस्य चित्तस्य, शंखपैत्त्याद्याकारतायां नयनादिगत-पित्ताद्यन्वय-व्यतिरेकाभ्याम्. अतो रूपादिवृत्तिषु चक्षुरादीनामपि कारणत्वं शास्त्रेषु उच्यते".

(Vijñānabhiksu's Vārtika on Vyāsabhāṣya, Samādhipāda-7).

This indicates only the outside object's knowledge or perception. It does not include perception of Ātman or Īsvara, since it combining with the senses does not give rise to it. In the perception of Ātman or Īśvara, there are no senses involved.

We gain perceptual knowledge through five sense organs of sound, touch, colour, taste and smell. Sometimes knowledge of perception is obstructed due to many reasons. Sāṅkhyakārikā enumerates eight such reasons viz.

1. being very far,
2. being very close,
3. disability of sense organs,
4. mind being inattentive,
5. object being too subtle,

6. object being hidden,

7. being overpowered by some other object and

8. being mixed with similar things

—sense object contact does not take place and prevent ordinary perception.

अतिदूरात् सामीप्याद् इन्द्रियघातात् मनोऽनवस्थानात्।
सौक्ष्म्याद् व्यवधानाद् अभिभवात् समानाभिहारात् च॥
(सांख्यकारिका ७)

Thus non-apprehension of existents is of eight kinds, whereas, non-existence (अभाव)is of four kinds viz. 1. prior non-existence (प्रागभाव) 2. posterior non-existence (प्रध्वंसाभाव) 3. absolute non-existence (अत्यन्ताभाव) and 4. mutual non-existence (अन्योन्याभाव). This makes non-apprehension as of twelve kinds. Māṭharācārya says: "एवम् इयं द्वादशधा अनुपलब्धिः. सताम् अष्टधा हि असतां चतुर्धा" For ordinary persons, perceptions are limited to specific awareness related to the gross aspects of experience, by Yogis and other higher beings are also able to perceive 'non-specific' (अविशेष) matters, such as the subtle elements.

It is necessary to note that Vācaspetimiśra for the first time made clear distinction between indeterminate (निर्विकल्प) and determinate (सविकल्प)perception in Sāṅkhya epistemology. The sense organs can only sense (आलोचनमात्र) the object without any mental ordering and verbal characterization i.e. mind is not involved in this stage nor can it be described

by speech. This is inderminate (निर्विकल्प)perception. Then mind performs the task of ordering and verbalizing the impression of the senses i.e. mind is involved in this stage and makes perceptual knowledge determinate (सांख्यकौमुदी).

Regarding the theory of perception, Vijñānabhiksu's special contribution is two fold (सांख्यप्रवचनभाष्य - -II.32). 1. Vijñānabhikṣu disagrees with Vācaspati and states that sense organs are capable of both indeterminate (निर्विकल्प) and determinate (सविकल्प)perception. Mind only plays a role of focusing attention (संकल्प) and initiating mental constructions (विकल्प). Here, Vijñānabhikṣu relates the role and function of sense capacities in perception and 2. Sāṅkhyakārikā and Pātañjala Sāṅkhya refer respectively to 'बुद्धिवृत्ति' and 'चित्तवृत्ति' but do not explain their functions in the cognitive process. Vācaspati carried the discussion further by attributing mere awareness with mental elaborations (निर्विकल्प) to the sense capacities and mental claboration (सविकल्प) to mind. According to Vijānabhikṣu, perception is primarily a result of interaction or will and sense capacities. Mind as the result plays a very minor role.

"कश्चित्तु निर्विकल्पकं ज्ञानमेव आलोचनम् इन्द्रियजन्यं च भवति, सविकल्पकन्तु मनोमात्रजन्यम् इति श्लोकार्थम् आह, तत् न...योगभाष्ये व्यासदेवैः विशिष्टज्ञानस्यापि ऐन्द्रियकस्य व्यवस्थापितत्वात्, इन्द्रियैः विशिष्टज्ञाने बाधकाभावात् च. सएव सूत्रार्थमपि एवं व्याचष्टे बाह्येन्द्रियम् आरभ्य बुद्धिपर्यन्तस्य वृत्तिः उत्सर्गतः क्रमेण भवति कदाचित्तु व्याघ्रादिदर्शनकाले भयविशेषाद् विद्युल्लतेव सर्वकरणेषु एकदैव वृत्तिः

भवति इति अर्थः इति. तदप्यसत्, सूत्रे इन्द्रियवृत्तिनामेव क्रमिकाक्रमिकत्ववचनात् न बुद्धयहंकारवृत्त्योः प्रसंगोपि अस्ति".

( सांख्यप्रवचनभाष्य २।३२ )

In Prasthānaratnākara, Puruṣottamacaraṇa has clearly accepted four means of valid knowledge viz. testimony/authority, perception (Pratyakṣam); tradition (Aitihya) and inference (Anumāan) "श्रुतिः प्रत्यक्षम् ऐतिह्यम् अनुमानं चतुष्टयम्" (प्रस्थानरत्नाकर २।२।९ ). First placeis given to Śabapramāṇa or testimony, since all other means of valid knowledge are dependent on Śruti (प्रस्थानरत्नाकर - II.II.12) "सर्वाण्येव प्रमाणानि सत्त्वमेव कथञ्चन, उपजीवन्ति तद् हेतौ कथितः पूर्वम् आगमः"), whereas, Sāṅkyas consider only three Pramāṇas (प्रत्यक्ष, अनुमान, शब्द) and they place Perception first.

Puruṣottamaji defines perception as "इन्द्रियात्मकं प्रमाणं प्रत्यक्षम्" (प्रस्थानरत्नाकर - p.127) perception is indentified with sense organs; that means sense organs are the instruments of direct perception. This knowledge of perception is gained through six instruments viz. five sense organs and the mind. "प्रत्यक्षे चक्षुरादिभेदेन षट् करणानि" (प्रस्थानरत्नाकर p.127).

Sāṅkhyas do not consider Perception as 'इन्द्रियात्मक', but according to them, Perception is reflective discerning ( अध्यवसाय ).

Perceptual knowledge is of six kinds viz.

1. visual ( चाक्षुषप्रत्यक्ष )

2. Tactual ( त्वाचप्रत्यक्ष )
3. Gustatory ( रासनप्रत्यक्ष )
4. Auditory ( श्रावणप्रत्यक्ष )
5. Olfactory ( घ्राणप्रत्यक्ष ) and
6. mental ( मानसप्रत्यक्षः ).

Manas is regarded as internal organ ( अन्तःकरण ) "तानि चक्षुः-त्वक्-घ्राण-रसन-श्रवण-मनो-भेदेन षट्"( प्रस्थानरत्नाकर p.127). These six faculties are considered atomic in size. They can not be perceived by sense organs, they are non-eternal yet long lasting and subject to transfermation. "एतेषां इन्द्रियाणां स्वरूपन्तु अणुतमम् अतीन्द्रियम्, अनित्यम्, चिरस्थायी विकारी च" ( प्र.र.p.128). Eyes can perceive form, cloour and size when it is manifested. Similarly, sense qualities of touch, smell, taste and sound should be manifested for the sake of perception. (प्र.र.-p.128-129). Desires, affection, passions etc. are perceived by the mind. "मनसस्तु कामादयो वृत्तयएव मनोग्राह्याः"( प्र.र.p.130 ).

Perception of the self (Ātma) in its pure form can not be perceived by ordinary perception. "आत्मातु केवलः शास्त्रीयसाधनम् अन्तरेण न प्रत्यक्षः तथा तद्धर्माः च"( प्र.र.p.120 ).

Only through proper means prescribed by the scriptures, the perception of the self (Ātma) is possible. The self can be experienced through the notion 'I' by an individual, due to the identification of self with ego. "अहंबुद्धिस्तु पटावृतघटबुद्धिवद् अहंकारसंसर्गद्वारिका व्यवहारोपयोगित्वात् प्रमाभासरूपैव, अहन्तातादात्म्यभानेन भ्रमरूपत्वात्"( प्र.र.p.130 ). Perception of the God is possible

only through the grace of God. This kind of perception is the seed of devotion-Bhakti. (प्र.र.p.160-161).

Tamas (darkness) is considered as separate category which can be perceived. It is not mere negation of light. Tamas is considered as production of Māyā. Human beings can not see through darkness, but animals like cat and owl can see in the darkness, because darkness of Māyā can not cover their eyes.

> ''अन्धकारस्थघटादिषुतु नृचक्षुः प्रति मायया तमोजननात् तदेव विषयीक्रियते, नतु विषयः तदावृतत्वात्. एवञ्च विषयालोकसंयोगस्य सहकारितापि न कल्पनीया, अभास्वर-द्रव्य-चाक्षुषत्वावच्छिन्नं प्रति दूरत्व-व्यवधानाभावादि-विशिष्टस्य विषयतयैव निर्वाहात्, ''यथाहि भानोः उदयो नृचक्षुषां तमो निहन्यात् नतु तद् विधत्ते'' ( भाग.पुरा.१०।२८।३४ ) इति वाक्ये भगवता सूर्योदयस्य नृचक्षुः-सम्बन्धि-तमोनिवारकत्वेनैव कथनेन आलोकसंयोगस्य विषयादिसंस्कारतायाः विरुद्धत्वात्. एवञ्च उलूकबिडालादीनाम् आलोकसंयोगाभावे वस्तुचाक्षुषमपि अनुकूलीभवति. तमस्तु पदार्थान्तरमेव न तेजोभावो ''अन्धकारोऽस्त्रियां ध्वान्तम्' ( अमरकोश १।८।३ ) इत्यादिनामपाठात् ''ध्वान्ते गाढे अन्धतमसम्'' ( तत्रैव १।८।३ ) इत्यादिभेदपाठात्, ''हतरूपन्तु तमसा वायौ ज्योतिः प्रलीयते, स्वतेजसा अपिबत् तीव्रम् आत्मप्रस्वापनं तमः'' ( भाग.पुरा.१०।३।१४ ) इति वध्य-घातकविरोधवचनात् च''.
>
> ( प्र.र.१३०-३१ )

Similarly reflection ( प्रतिबिम्ब ) also is accepted as separate category and product of Māyā ''तथा प्रतिबिम्बस्यापि पदार्थान्तरत्वम्'' ( प्र.र. - १३१ ).

Abhāva (non existence) is locus of negated object. Negation is itself regarded as the positive existence of the locus in which the negation appears with specific reference to the appearance or dissapearance of the negated object. Non-existence is connected with material cause. When, material cause is seen, appearance and dissapearance of the product of that cause is subject of perception (प्र.र. p.131-36).

According to Sāṅkhyas, the object beyond sense-perception (अतीन्द्रिय) are subject of inference and authority "अतीन्द्रियाणां प्रतीतिः अनुमानात्" (सांख्यकारिका-६) which is different than Vallabha view, which accepts perception of self through scriptures and not through Inference. In the earlier, Sāṅkhya school, perception of God is not accepted because existence of God can not be proved "ईश्वरसिद्धेः" (सांख्यसूत्र १।९२)..

Four kinds of Abhāva (non-existence) is accepted by Vallabhas as well as Sāṅkhyas. Neither Vallabhas, nor Sāṅkhyas accept non-apprehension (अनुपलब्धि) as an independent means of valid knowledge. After evaluating views of other schools of thought, in this regard, Puruṣottamacaraṇa has stated that it is not necessary to accept non-apprehension as an independent means of valid knowledge to perceive. Because, just as after perceiving particular object through the eyes, its knowledge is manifested. Similarly, we do not get knowledge of any object through non-apprehension "अनुपलब्धेः न अभावग्रहणं प्रति करणत्वं, चक्षुषा अवगतः, इतिवद् "अनुपलब्ध्या अवगतः" इति प्रत्ययाभावात्" (प्र.र.१४१).

Process of direct perception according to Puruṣottamacaraṇa as follows—

"तत्र अयं क्रमः - "दैवानुकूल्येन अन्तर्यामिणा मनः तत्तत्कार्यार्थं प्रेर्यते, तत् चइन्द्रियप्रेरणाय तत्तदिन्द्रियेण संसृज्यते. तत्र तत्तदिन्द्रियदेवतानुकूल्ये विषयसंसृष्टैः इन्द्रियैः स्वावच्छिन्ने मनसि पूर्वं निर्विकल्पकं उत्पाद्यते. तदा इन्द्रियदेशे बुद्धेः वृत्तिः. ततो बुद्ध्यापि वृत्तिद्वारा तदनुग्रहे सविकल्पकं भवति".

(प्र.र.p.147 - 148)

1. Mind becomes ready for particular action, inspired by inner controller ( अन्तर्यामी );
2. then mind inspires concerned sense organs;
3. when sense organs are in agreement with their presiding deities, then only sense organs come in contact with objects;
4. then indeterminate knowledge is generated after objects are reflected in the sense organs;
5. then along with the mixing and friction of the three Guṇas in intellect, intellect may grace the sense organs, partially or totally;
6. then mental states accordingly, manifest and different kinds of determinate knowledge arise;
7. emotions like attachment, aversion or neutrality etc. become strong according to the different kinds of determinate knowledge;
8. from those emotions, inner and external activities, like will

efforts etc. emerge;

9. then the activity of accepting or rejecting or neutral attitude takes place and

10. in the end, gain and loss which is cause of happiness and sorrow or indifference manifest.

The division of indeterminate ( निर्विकल्पक ) and determinate ( सविकल्पक ) knowledge is explained by Puruṣottamacaraṇa in the above process itself. Indeterminate knowledge created by the sense-object contact achievers its visual etc. determinate state through mental states ( वृत्ति ).

Here, Puruṣottamacaraṇa presents the Sāṅkhyas as prior view and refutes it. According to Sāṅkhyas, the form of the objects seen outside, can be felt within after closing eyes. This form can not be of the outer object, because abandoning outer substratum, entering of that form within seems impossible. Therefore, that form has to be accepted as the form of some inner object within. Sāṅkhya school calls it 'Vṛtti' (mental state) as different egoistic principle.

"तत्र नेत्रे निमीलने कृते बहिर्दृष्टपदार्थस्येव कश्चिदाकारो नेत्रान्तर् भासते. स आकारो न बाह्यवस्तुनः, आश्रयम् अतिहाय तत्र तस्य अशक्यवचनत्वात्. अतः स आन्तरस्यैव कस्यचन भवितुम् अर्हतीति तदाश्रयत्वेन साङ्ख्यैः आहङ्कारिकं तत्त्वान्तरं वृत्ति नामकं कल्प्यते''.

( प्र.र.p.144 )

Sāṅkhyas believe that the perceived object takes form

of internal state, but treat it as different principle or different property of Ātman. Puruṣottamacaraṇa disagrees with this stand and says that it is necessary to note that the form of the perceived object in the eyes is the matter of experience (अनुभवगोचर), therefore, it is proper to accept internal state. But should not be deemed as different principle or different inherent property of Ātman. Because, this is some particular state of intellect take form of outer object, answer to such a doubt is, when sense organs combined with the mind come in contact with outer objects, then form of the object is reflected in sense organs, jst as one's face is reflected in the mirror. Continuous mixing and friction of the Sattva, Rajas and Tamas cause disturbance and non-disturbance in the intellect; therefore, due to this disturbance mental state, sometimes is transformed, partially or totally taking the shape of reflections in the sense organs of outer objects and sometimes it may not take any shape also. It happens so because intellect helps cognitive organs and organs of actions, therefore, when intellect on position of helping the organs, determinate knowledge of error arises. Thus all the mental states are particular state of intellect only. After intellect is shaped in the form of object supplied by sense-object contact, then only direct perception takes place, otherwise, if intellect shaped in the form of different than the object, then it is believed to be an error. Similarly, due to the various kinds of mental states, all other subdivisions of knowledge should be understood as an outcome of different mental states. As per the statement of Bhāgavata, "mental states, viz., awakening, dreaming and

उच्यते. न कश्चिद् अनुभवः तत्र.

**के.ई.देवनाथन् :** तथा नास्ति. ज्ञाततासामान्यं सप्रकारकमेव. ज्ञातता तावद् अनुभवेनैव ...

**विन्ध्येश्वरीप्रसाद :** निर्विकल्पकज्ञाने फलमेव नास्ति. तर्हि कथं प्रत्यक्षत्वस्य सिद्धिः ?

**कृष्णमूर्ति शास्त्री :** निर्विकल्पकं निर्विकल्पकेनैव समाप्यते इति तु उक्तम्. तदनन्तरक्षणएव सविकल्पकं प्रायो जायते. तत्र फलं वर्तते प्राकट्यतः इति तु अत्र अंगीकृतम्. निर्विकल्पकन्तु सविकल्पकस्य स्वोपारोहः आरोहणपंक्तिरेव... वर्तते. अतएव यावत् ...

**बलिराम शुक्ल :** प्राकट्यं कुत्र ? निर्विकल्पके अस्ति वा सविकल्पके ?

**कृष्णमूर्ति शास्त्री :** सविकल्पके एव.

**अम्बिकादत्त शर्मा :** बौद्धपक्षको लेकर दो शंकाएं हैं एक शंका प्राप्यकारित्वको ले कर है और दूसरी प्रत्यक्षकी निर्विकल्पकताको ले कर है. श्रोत्र और चक्षुरिन्द्रिय का जब प्रभाकर मतमें प्राप्यकारित्व माना जाता है तब बौद्धपक्षसे शंका होती है. ''सान्तर्ग्रहणं न स्यात् प्राप्तौ ज्ञानाधिकस्य च, बहिः नाक्षम् अधिष्ठानात् तच्चिकित्सादियोगतः'' ये चार युक्तियां हैं प्राप्यकारित्वके विरोधमें.

**के.ई.देवनाथन् :** यदि पार्श्वे अस्ति तदानीं ज्ञानन्तु अधिकं भवति.

**कृष्णमूर्ति शास्त्री :** पार्श्वस्थितस्य दूरस्थितस्य च चक्षुषा ग्रहणम् अस्ति न वा ?

**के.ई.देवनाथन् :** ...विशदावभासः...

**कृष्णमूर्ति शास्त्री :** तन्नु देशप्रयुक्तो भवितुम् अर्हति. अनेन हेतुना न गच्छति इति तु कथम् आगच्छति ? अतएव गच्छति इति मया उच्यते. कुतः, यस्माद् अत्र गमनम् ... अत्र सन्निकृष्टत्वात् विशदतरं भासते, तत्र ...

**के.ई.देवनाथन् :** बहुभागसन्निकर्षाभावे अविशदग्रहणम्.

**कृष्णमूर्ति शास्त्री :** विशदाविशदत्वन्तु दूरस्थत्व-समीपस्थत्व ...

**डी. प्रह्लादाचार :** रश्मिद्वारा खलु सन्निकर्षः ?

**कृष्णमूर्ति शास्त्री :** चक्षुरिन्द्रियं गच्छति इति उक्तौ तथा न. तैजसत्वात् तेषां व्यापकत्वम् अंगीक्रियते. बहिः गच्छति ...

**डी. प्रह्लादाचार :** रश्मयः क्षीणाः भवन्ति दूरस्थवस्तुविषये, समीपस्थविषयेतु गाढा भवन्ति.

**कृष्णमूर्ति शास्त्री :** अतएव दूरे शब्दो मया श्रुतः इति अनुव्यवसायः भाट्टानाम् अस्ति. इतरेषाम् अस्ति न वा. अनुव्यवसायविषयेतु निर्णयएव न स्यात्. ईश्वरस्य समीपे कर्पूरस्य ...

**डी. प्रह्लादाचार :** अन्यः प्रश्नः.

**अम्बिकादत्त शर्मा :** दूसरी शंका प्रत्यक्षकी निर्विकल्पकताको ले कर है. ज्ञानमें शब्दानुविद्धता किन कारणोंसे आती है? यदि ज्ञानके कारणोंमें ही कहीं शब्दानुविद्धताका स्रोत है तो जिस क्षणमें ज्ञान उत्पन्न होता है उसी क्षणमें उसे शब्दानुविद्ध हो जाना चाहिये.

**कृष्णमूर्ति शास्त्री :** सर्वेषां कार्याणां क्रमिकत्वम् अवश्यम् अंगीकार्यम्. एकक्षणावच्छेदेन सर्वं भवितुं न अर्हति. सर्वस्यापि क्रमापेक्षातु वर्तते क्षणविलम्बो वा आवश्यकः. प्रथमतएव शब्दानुविद्धतया तादृशजात्यादिमत्त्वेन क्रियावत्त्वेन नैव भवति. अतएव माघे द्वितीये वा तृतीये वा श्लोके उक्तं "विभुः विभक्तावयवं पुमानिति क्रमाद् अमुं 'नारदः' इति अबोधि सः" इति क्रमिकत्वाद् वाचःप्रवृत्तेः वा सर्वस्याः क्रियायाः... शब्दानुविद्धत्वं कुतः तस्मिन् क्षणे न भाति? कुतः अस्मिन् क्षणे भाति?

**के.ई. देवनाथन् :** मम भाति यत् तेषां प्रश्नः एवम् अस्ति. प्रथमतो निर्विकल्पकं जायते अनन्तरन्तु सविकल्पकं शब्दानुवेधविशिष्टं जायते.

**कृष्णमूर्ति शास्त्री :** तत्र सामग्री का...

**के.ई. देवनाथन् :** ...अधिका सामग्री? निर्विकल्पकघटिता सामग्री. निर्विकल्पकं वस्तुविषयकज्ञानम्. वस्तुनि ज्ञाते तेन तावद्

शब्दसंस्कारः उद्बुद्धो भवति. तेन द्वितीयं यज् ज्ञानं भवति शब्दानुविद्धविषयकम् ...

**कृष्णमूर्ति शास्त्री :** तदेव उक्तम्, सविकल्पकद्वारा उद्बोधः.

**बलिराम शुक्ल :** किं सविकल्पकज्ञानमात्रं शब्दानुविद्धं भवति ?

**के.ई.देवनाथन् :** तथा नास्ति.

**कृष्णमूर्ति शास्त्री :** सविकल्पकज्ञानं शब्दानुविद्धमपि भवति.

**अम्बिकादत्त शर्मा :** शाब्दं नतु अर्थोत्पन्नं जायते, शाब्दं नतु इन्द्रियोत्पन्नं जायते तर्हि किं स्रोतेन ज्ञानं शब्दानुविद्धं भवति ?

**प्रद्योतकुमार :** निर्विकल्पकजन्य... तत्र सामग्री ज्ञानमेव.

**विन्ध्येश्वरी प्रसाद :** सर्वोऽपि ज्ञानं किं शब्दानुविद्धं नास्ति ?

**कृष्णमूर्ति शास्त्री :** इति नियमो नास्ति.

**सिद्धेश्वर भट्ट :** 'सन्निकर्ष' और 'सम्प्रयोग' के बीच क्या अन्तर है ?

**के.ई.देवनाथन् :** दोनों एकार्थक हैं. प्राचीन न्यायभाष्यवार्तिकमें 'सम्प्रयोग' शब्द है. बादमें 'सन्निकर्ष'का प्रयोग किया गया है.

**प्रद्योतकुमार :** मीमांसकैः रूपत्वं न खण्डितं, रूपत्वजातित्वं खण्डितम्. ईश्वरः सृष्टा भवति न वा ?

**बलिराम शुक्ल :** भाट्टमते ईश्वरः स्वीकृतो वर्तते वा ?

**कृष्णमूर्ति शास्त्री :** स्वीकृतः.

**बलिराम शुक्ल :** कीदृशः ? सृष्टिकर्तृत्वेन ?

**कृष्णमूर्ति शास्त्री :** यदि समीचीनः सर्वोत्तमः मीमांसकः सः शब्दस्वरूपएव देवता ईश्वरो नास्ति इति वदति. परन्तु खण्डदेवपर्यन्तं ये वर्तन्ते ... मम जिह्वापि भीतिः. ''वाणीः दूष्यति'' इत्यादिकन्तु अंगीकृतम् अस्ति. परन्तु ममतु एवं प्रतिभाति यत् तेषामपि ईश्वरनिराकरणे न तात्पर्यम्. ईश्वरो वर्तते इति कृत्वा कर्माणि परित्यज्य तस्य SOMETHING ... दत्वा किमपि कुर्याद् इति भीत्या तैः ईश्वरनिराकरणं कृतम् इति तेषां भावः.

**प्रद्योतकुमार :** सर्वज्ञ ... प्रमालक्षणं ...

**के.ई.देवनाथन् :** नैयायिकमतएव सर्वज्ञः ईश्वरः स्वीकृतः. तत्र ''यथार्थानुभवो ...'' इति. तत्र अनधिगताबाधितार्थगन्तृत्वम् इति ईश्वरस्वीकारपक्षे नास्ति. अतएव वार्तिककारैः ''यथा व्योमशरीरोऽपि परमात्मा प्रदर्श्यते'' ...

**कृष्णमूर्ति शास्त्री :** ईश्वरस्य ज्ञानं सर्वं प्रत्यक्षरूपम्. मीमांसकानामपि प्रत्यक्षे अनधिगतत्वं न दोषाय. शब्दविषयएव अधिगतत्वं दोषः. इदानीम् अत्र Water Bottle दृष्ट्वा पुनरपि दृश्यते चेत् द्वितीयस्य ...

**के.ई.देवनाथन् :** धारावाहिकज्ञाने किमर्थम् ...

**कृष्णमूर्ति शास्त्री :** अनधिगतांशो वर्तते. शब्दे तावत् तथा न भवति.

**के.ई.देवनाथन् :** ईश्वरो न स्वीक्रियते इति कथं ...

**कृष्णमूर्ति शास्त्री :** मया किम् उच्यते, ईश्वरस्य ज्ञानं परोक्षं वा प्रत्यक्षं वा ?

**के.ई.देवनाथन् :** प्रत्यक्षमेव भवति.

...

**डी. प्रह्लादाचार :** तेषाम् अभिप्रायः एवं भाति. ईश्वरस्यापि अनधिगतार्थगन्तृत्वं नास्ति ...

**कृष्णमूर्ति शास्त्री :** क्षणविशेषविशिष्टत्वेन भवितुम् अर्हति ?

**डी. प्रह्लादाचार :** अनधिगतार्थगन्तृत्वमेव वर्तते...

**कृष्णमूर्ति शास्त्री :** एवम्. कुतः ?

**डी. प्रह्लादाचार :** तावता दोषो नास्ति. अनधिगतार्थगन्तृत्वं नाम ईश्वरस्य अज्ञानम् अस्ति वा इति प्रष्टव्यं भवति. परन्तु ईश्वरो यद् अस्ति तद् जानाति. यन् न अस्ति न तज् जानाति. यन् न अस्ति न तज् जानाति चेत् तस्य अज्ञानित्वं वा भ्रान्तित्वं न सम्भवति. अस्मिन् क्षणे... असतो ज्ञानं नास्ति तस्य. सतो ज्ञानं वर्तते. एवञ्च यस्मिन् क्षणे घटो अस्ति तत्क्षणसम्बद्धतया घटस्य ज्ञानं तावत् अनधिगतार्थग...

**कृष्णमूर्ति शास्त्री :** ... धारावाहिकस्थलन्तु भवितुम् अर्हति. ... जातित्वं

खण्डितं रूपत्वं न खण्डितम् इति. तदुपरि विवदतया मया ग्रन्था: न स्मर्यते. परन्तु तेषां रूपत्वं नास्ति इति उक्तौ तद् अंगीकार्यमेव. गुरुमतएव तै: उक्तम्.

**के.ई.देवनाथन् :** कारणम् अस्ति. संस्थानन्तु न भवति तदेव कारणम्. आकृति: जाति:.

**प्रद्योतकुमार :** धारावाहिकज्ञाने अन्योन्याश्रयदोषो भवति.

**डी. प्रह्लादाचार :** प्रश्नं विवृणोमि. ज्ञानभेदेन प्राकट्यभेद:. प्राकट्यभेदेन ज्ञानभेद: एवं रीत्या अन्योन्याश्रय:. तेषाम् अभिप्राय: एवं, उत्तरज्ञानेन पूर्वज्ञानजनित-प्राकट्यावच्छिन्नविषय: स्वीक्रियते. तस्माद् उत्तरज्ञानस्य अनधिगतार्थगन्तृत्वम् इति वदन्ति. एवञ्च पूर्वज्ञानेन हि प्राकट्यं विलक्षणं तेन जायते इति हेतो: उत्तरज्ञानात् पूर्वज्ञानं भिद्यते. तत्र ज्ञानानां भेद: कुत: ...

**कृष्णमूर्ति शास्त्री :** ज्ञानानां भेदो न साधनीय:, सिद्ध:. क्षणे-क्षणे वृत्तिभेद: इति मतं स्वीकृत्य इदं प्रवर्तते. तत्र भेदस्य प्रमाणं न अपेक्षितम्. वृत्ति: वा भवतु अन्यो वा भवतु.

**के.ई.देवनाथन् :** तेषां प्रश्न: एवं स्यात्, ज्ञानस्य अनधिगतार्थगन्तृत्वं तदा सिद्ध्यति यदि क्षणादि: भिन्ना: उत्तरत्र ज्ञाने विषयो भवति. उत्तरत्र ज्ञाने क्षणादि: भिन्न-भिन्न पदार्था: यदि विषयो भवति तदानीमेव द्वितीयादिज्ञानानाम् अनधिगतार्थगन्तृत्वं भवति. अनधिगतार्थगन्तृत्वसिद्ध्यर्थं ...

**कृष्णमूर्ति शास्त्री :** क्षणानां विलक्षणानां भिन्नत्वे प्रमाणं न अपेक्षितम्. एकैक: क्षण: स्वतो भिन्नएव वर्तते. खण्डकाला: सर्वेऽपि भिन्नभिन्ना: तत्तद्विशेषावच्छिन्ना: स्वतो भिन्ना:.

**प्रद्योतकुमार :** सामग्रीतो भिन्ना:...

**के.ई.देवनाथन् :** सामग्रीतो भिन्ना:. अनन्तरं कालस्य तावद् वेदान्तिभि: भाट्टै: च नीरूपस्यापि विषयत्वं स्वीक्रियते.

**गो.श्या. म. :** प्रत्यक्षमें धारावाहिकज्ञानमें उत्तरोत्तर अनधिगतका अधिगम होता रहता है. इसी तरह शब्दमें भी सम्भव है. जैसे

उद्दिष्ट पदसे अधिगतका लक्षणसे जब ज्ञान होता है तब वह ज्ञान अनधिगतका ही होता है. लक्षणघटकपदाधिगत अर्थका जब परीक्षासे अधिगम होता है तब वह ज्ञान लक्षणानधिगत अर्थका परीक्षामें अधिगम होता है. अतः शब्दमें भी यह सम्भव है. और इसी तरह सूत्राधिगतार्थका भाष्यमें ...

**कृष्णमूर्ति शास्त्री :** हो सकता है. आपके कहनेके बाद मुझको भी ... अनुमानमें भी हो सकता है. उपनयवाक्ये निगमनवाक्ये च ...

**के.ई.देवनाथन् :** तत्र मर्यादा वर्तते. शब्दे तावत् कालो न बोध्यते. शाब्दबोधे कालो न विषयः. प्रत्यक्षे तावत् अनुल्लिखितोऽपि कालो विषयः.

**कृष्णमूर्ति शास्त्री :** आचार्याः शृण्वन्तु. भवद्भिः इदानीं प्रत्यक्षएव धारावाहिकम् इति न, शब्दादिष्वपि धारावाहिकम् अस्ति इति. शब्देन प्रथमतः ‘‘सत्यं ज्ञानम् अनन्तं ब्रह्म’’ इति स्वीक्रियताम् ...

**डी. प्रह्लादाचार :** अनधिगतार्थगन्तृत्वम् ...

**कृष्णमूर्ति शास्त्री :** तदेव. धारावाहनं यदा भवति तदानीमेव खलु अयं प्रश्नः उत्तिष्ठति. यदि एकं ज्ञानं तदानीम् अनधिगतार्थकत्वं तदेव अनुस्यूततया भासते यदा तदा धारावाहः शब्दः प्रयुज्यते. एवञ्च यथा प्रत्यक्षे ‘‘अयं घटः अयं घटः अयं घटः ...’’ इति यदा भवति एवमेव शाब्दजन्ये बोधविषयेऽपि एकं वाक्यं तत्र च बहूनि विशेषणानि एकं विशेष्यम् इति स्वीक्रियताम्. प्रथमविशेषणविशिष्टतया ज्ञातम्, अनन्तरं द्वितीयविशेषणविशिष्टतया तदेव विशेष्यं ज्ञायते. एवमेव खलु भवताम् आशयः ? तत्रापि अधिगतस्यैव पुनः अधिगमः वर्तते.

**के.ई.देवनाथन् :** नहि. अनधिगतस्यापि अधिगमः वर्तते.

**कृष्णमूर्ति शास्त्री :** अधिगतं विशेष्यं पुनरपि विशेषणान्तरविशिष्टत्वेन

अधिगम्यते. एवञ्च धारावाहिकस्थले अनधिगतार्थनिर्वाहार्थं या प्रक्रिया सा अत्र ...

**डी. प्रह्लादाचार :** तथा प्रश्नो नास्ति. उद्देश्यवाचकपदेन केवलं वस्तुस्वरूपबोध्यते. लक्षणवाचकपदगुच्छेन अन्ये विषया: प्रतिपाद्यन्ते. परीक्षासम्बन्धिवाक्येन अपरे विषया: प्रतिपाद्यन्ते. एवं रीत्या अनधिगतार्थ ...

**के.ई.देवनाथन् :** तत्तु इष्टमेव.

**कृष्णमूर्ति शास्त्री :** तत्रतु प्रश्नएव न उत्तिष्ठति. कुत:? उद्देश्यमें तो सामान्यरूपसे ज्ञात होता है. लक्षणमें कुछ विषदांशोंका नूतन अंशोंका भान हाता है. परीक्षामें उससे भी प्रकटतया ...

**गो. श्या. म. :** तदा प्रत्यक्षएव अनधिगतार्थज्ञापकता...

**डी. प्रह्लादाचार :** नास्ति. नास्ति.

**गो. श्या. म. :** तथा शब्दे नास्ति इति यद् उक्तं तत्र मया प्रच्छ्यते.

**डी. प्रह्लादाचार :** प्रमाणसामान्यलक्षणम् इदम्. अनधिगतार्थगन्तृप्रमाणम् इति तु न केवलं प्रत्यक्षप्रमाणस्य ...

**अच्युतानन्द दास :** यथा भवद्भि: उक्तं द्रव्य-जाति-गुण-क्रिया-नामभि: पञ्चधा विभक्तं वर्तते सविकल्पकज्ञानं तावता किं तत्र भाट्टमते पदार्थानां पञ्चधा विभागो भवति इति कल्पयितुं शक्यते वा?

**कृष्णमूर्ति शास्त्री :** पदार्थानां संख्याविषये मया न उक्तम्. सविकल्पकं जायते अनन्तरं निर्विकल्पकम्. सविकल्पकज्ञानं पञ्चधा विभज्यते.

**अच्युतानन्द दास :** वैयाकरणा: यथा पदस्य पञ्चधा विभागं कुर्वन्ति तथा अत्र सविकल्पकस्य पञ्चधा विभागो दृश्यते. तत्र वैयाकरणा: द्रव्य-जाति-गुण-क्रिया-नाम इति पञ्चधा पदविभागं कुर्वन्ति तथैव अत्र सविकल्पकस्य पञ्चधा विभागो दृश्यते. यदि निपुणं परीक्षाम: तर्हि किं भवति, यथा न्याय-वैशेषिकसम्प्रदाये द्रव्य-गुण-क्रिया-सामान्य: इति चत्वार: पदार्था: अत्र आगता:

सन्ति. अत्र 'नाम' पदेन कदाचित् शब्दस्य द्रव्यत्वं स्वीकृत्य भाट्टैः ...

**डी. प्रह्लादाचार :** प्रत्यक्षं तावत् सविकल्पकम् एवं पञ्चविधं भवति तावता पदार्थानां पाञ्चविध्यं नास्ति. यतोहि प्रात्यक्षाग्राह्याः अभावादिपदार्थाः तन्मते वर्तन्ते. अभावोऽपि पदार्थः भाट्टमते स्वीकृतः ?

**कृष्णमूर्ति शास्त्री :** न स्वीकृतः.

**अच्युतानन्द दास :** तत्र प्रश्नो वर्तते. तर्हि सम्बन्धरूपपदार्थोऽपि वर्तते वा ? तस्य ग्रहणं कथं भवति ? तत्र समवायपदार्थस्य ...

**कृष्णमूर्ति शास्त्री :** समवायो न अंगीक्रियते संयोगो अंगीक्रियते.

**डी. प्रह्लादाचार :** सम्बन्धस्तु गुणे अन्तर्भवति, गुणविकल्पः.

**अच्युतानन्द दास :** गुणे अन्तर्भवति वा सम्बन्धः ?

**डी. प्रह्लादाचार :** एवं संयोगः.

**अच्युतानन्द दास :** संयोगो वर्तते. तादात्म्यं गुणे ...

**डी. प्रह्लादाचार :** तादात्म्यन्तु वस्तुस्वरूपमेव द्रव्यं भवति.

**अच्युतानन्द दास :** तादात्म्यस्य ज्ञानं कथं भवति ? प्रत्यक्षेण भवति वा अन्यथा ?

**कृष्णमूर्ति शास्त्री :** प्रत्यक्षेणैव भवति. यः पदार्थो दृश्यते तदात्मतया तादात्म्यं...

**अच्युतानन्द दास :** यदि प्रत्यक्षेण तादात्म्यस्य ज्ञानं भवति तर्हि तादात्म्येन सह कः सन्निकर्षः. केनच इन्द्रियेण भवति इति प्रश्नः.

**गो. श्या. म. :** गुण-कर्म-सामान्यानां सर्वेषामपि धर्मे अन्तर्भावो भवितुम् अर्हति ...

**बलिराम शुक्ल :** किं नैयायिकानां मते समवायस्य ज्ञानं सर्वथा प्रत्यक्षं भवति वा ?

**अच्युतानन्द दास :** नहि. अनुमेयमपि भवति. अत्रतु भाट्टमते किं भवति इति जिज्ञासा वर्तते. तादात्म्यस्य ज्ञानं कथं भवति ?

**विन्ध्येश्वरीप्रसाद :** वस्तुनो धर्मत्वेनैव भवति.

**कृष्णमूर्ति शास्त्री :** तादात्म्यं चक्षुषा गृह्यते. कुतो ? घटरूपत्वात्. तादात्म्यं द्रव्यरूपं स्वीक्रियते.

**प्रद्योतकुमार :** सन्निकर्षस्य सन्निकर्षम् अस्ति न वा ?

**अच्युतानन्द दास :** सएव प्रश्नः.

**डी. प्रह्लादाचार :** घटस्य प्रत्यक्षं घटगतरूपस्य प्रत्यक्षं च. घट-रूपयोः तादात्म्यं यदि अंगीक्रियते समवायानंगीकर्तृभिः तस्य प्रत्यक्षम् एवञ्च प्रत्यक्षत्रयम् अत्र वर्तते—घटप्रत्यक्षं, घटगतरूपप्रत्यक्षं, घट-रूपयोः दातात्म्यप्रत्यक्षं च इति. तत्र तादात्म्यप्रत्यक्षे कः सन्निकर्षः इति तेषां प्रश्नः. अयन्तु प्रश्नः समाधेयः.

**कृष्णमूर्ति शास्त्री :** मयातु एवं चिन्त्यते, तादात्म्यं घटरूपम्. तदपि द्रव्ये अन्तर्भूतमिव. तस्माद् घटस्य प्रत्यक्षे यः सन्निकर्षः संयोगः तेनैव घटतादात्म्यमपि गृह्यते.

**अच्युतानन्द दास :** तर्हि स्वरूप-तादात्म्ययोः कः भेदः स्यात् इति प्रश्नः.

**प्रद्योतकुमार :** नास्ति भेदः.

**अच्युतानन्द दास :** स्वरूपसम्बन्धं भिन्नं स्वीकुर्वन्ति नैयायिकाः, तादात्म्यमपि भिन्नं स्वीकुर्वन्ति. ...

**कोलाहलः**

**डी. प्रह्लादाचार :** भवतां प्रश्नमेव विवृणोमि. तादात्म्यस्य घटस्वरूपत्वं स्वीकृत्य घटः तादात्म्यम् इति भिन्नं नास्ति. तस्मात् घटे यः सन्निकर्षः तादात्म्येऽपि सएव सन्निकर्षः इति तेषाम् उत्तरम्. परन्तु तदुपरि प्रश्नो भवति. यदि तादात्म्यं घटः च एकएव तर्हि रूपे घटएव सम्बन्धः स्यात्. तादात्म्यम् इति कश्चन सम्बन्धः कुतः उच्यते ? घटस्य रूपे तादात्म्यं सम्बन्धः. तादात्म्यञ्च घटएव. एवञ्च घटएव सम्बन्धः इति आगतम्. तर्हि तादात्म्यम् इति मध्ये कुतः आनीयते ? रूपे घटस्य सम्बन्धः घटएव इति उच्यताम्.

**कृष्णमूर्ति शास्त्री :** अहं प्रतिबन्द्या उत्तरं ददामि. स्वरूपसम्बन्धः स्वीक्रियते...

**डी. प्रह्लादाचार :** प्रतिबन्दी मास्तु भोः...

**के.ई.देवनाथन् :** प्रतिबन्द्या न उच्यते. तेन वाक्येन समाधानम् उच्यते. कथम् इति चेत्, स्वरूपसम्बन्धस्य लक्षणं मणिकारेण उक्तम् अस्ति ''सम्बन्धान्तरं विना विशिष्टप्रत्ययनियामकत्वं स्वरूपसम्बन्धत्वम्''. एवञ्च सम्बन्धान्तरं नाम स्वव्यतिरिक्तं सम्बन्धं विना इति अर्थः क्रियते. एवञ्च विशिष्टबुद्धिनियामकत्वेन तादात्म्यं स्वीक्रियते. अतो हेतोः तस्य भिन्नत्वन्तु न आवश्यकम्. भिन्नत्वाभावेऽपि सम्बन्धस्य घटापेक्ष्यतादात्म्यस्य वा स्वरूपस्य वा स्वापेक्ष्यभिन्नाभावेऽपि विशिष्टप्रत्यययोग्यजननत्वम् अस्ति.

**डी. प्रह्लादाचार :** घटस्यैव वर्तते?

**के.ई.देवनाथन् :** घटस्यैव वर्तते केनचिद् आकारेण तद्व्यक्तित्वेन आकारेण. घटस्य घटत्वेन रूपेण तत्र आश्रयत्वम् अस्ति. सम्बन्धत्वं तद्व्यक्तित्वेन अस्ति, स्वरूपत्वेन अस्ति.

**डी. प्रह्लादाचार :** एवमेव वक्तव्यं नतु तादात्म्यमिति सम्बन्धः इति वक्तव्यम्. घटस्य रूपे तद्व्यक्तित्वेन सम्बन्धत्वं घटत्वेन द्रव्यत्वम्.

**के.ई.देवनाथन् :** तद्व्यक्तित्वमेव तादात्म्यम्.

**अच्युतानन्द दास :** यदि नीलो घटः इति स्वीक्रियताम्. नीलघटपदार्थमध्ये तादात्म्यं वर्तते अभेदरूपम्.

**बलिराम शुक्ल :** 'तादात्म्यम्' इत्यस्य कः अर्थः? स्ववृत्त्यसाधारणधर्मः इति व्युत्पत्तिवादे प्रतिपादितम्.

**प्रद्योतकुमार :** ''शुक्लः घटः'' इत्यस्य को अर्थः? घट-शुक्लत्वयोः सम्बन्धः तादात्म्यरूप...

**के.ई.देवनाथन् :** ... सर्वेऽपि विषयाः शास्त्रदीपिकायां चर्चिताः. केवलं भेदो न, केवलं अभेदो न, भेदाभेदः. उभयोरपि तात्विकत्वम् इति मीमांसकसिद्धान्तः.

**डी. प्रह्लादाचार :** एवञ्च तादात्म्यं यदि भेदाभेदः तर्हि तद्व्यक्तित्वम् इति न वाच्यम्.

**के.ई.देवनाथन् :** तद्व्यक्तित्वरूपो अभेदेन रूपेण अत्र ग्राह्यत्वम् उक्तम्. भेदांशेन तावत् अग्राह्यत्वमपि भवति.

**डी. प्रह्लादाचार :** तद्व्यक्तित्वं हि घटनिष्ठो असाधारणो धर्म:. सच रूपे घटस्य सम्बन्ध: इति उच्यते चेद् घटे तद्व्यक्तित्वम् आयाति. घटस्य यो असाधारणधर्म: सो रूपनिष्ठ: इति वक्तव्यं भवति.

**के.ई.देवनाथन् :** स्वीक्रियते. परन्तु...

**डी. प्रह्लादाचार :** परन्तु रूपस्य तावद् गुणत्वम् नतु तद्व्यक्तित्वरूपत्वम्.

**के.ई.देवनाथन् :** भेदाभेदो अत्र विस्तरणीयो वर्तते. भेदाभेदवादिभि: अवच्छेदकभेद: स्वीक्रियते एतै: मीमांसकै:. केनचिद् अवच्छेदेन तद्व्यक्तित्वं रूपे स्वीक्रियते केनचिद् अवच्छेदेन तदभावोऽपि स्वीक्रियते. अन्यथा ...

**डी. प्रह्लादाचार :** गोस्वामिचरणानां प्रश्नोपरि किमपि वक्तुम् इच्छति भवान् ?

**कृष्णमूर्ति शास्त्री :** शाब्दबोधेऽपि धारावाहिकस्थलवद् ज्ञातज्ञानं वर्तते इति. तत्रतु उद्देश्ये यो विषयो अवगत: तस्य अनवगता: अंशा: लक्षणे ज्ञायन्ते, तत्रापि अनवगता: अंशविशेषा: परीक्षायां ज्ञायन्ते इति अनधिगतार्थत्वं सुस्पष्टं वर्तते. तत्र कालक्षणघटना न आवश्यकी. यत्रतु अधिकविषयप्रवेशो नास्ति ''घटोऽयं घटोऽयं घटोऽयम्'' इत्येव धारावाहिकस्थलं भवति तत्र कालविशेष: सूक्ष्मं प्रवेश्य तद्द्वारा अनधिगतार्थकत्वकल्पनं कर्तव्यम् इति श्रमो जायते. तत्रतु भवन्निर्दिष्टस्थले उद्देश्य-लक्षणे परीक्षा च इत्यादौ तु विशेषविशेषा: उद्देश्यापेक्षया केचन विशेषा: लक्षणे यथा वा तत्र उपनयवाक्यात् शब्दबोधानन्तरं पुन: निगमनवाक्यात् प्रथमत: ''पर्वतो वह्निमान्'' इत्यनेन को विशेष: ? तदपेक्षया विशेष: ... अनुमानेऽपि एवं वक्तुं शक्यते इति मया तदर्थमेव उक्तम्.

**प्रद्योतकुमार :** सर्वथा कथञ्चिद् वैलक्षण्यं सम्भवति तदा अनुवाद-प्रमाण ... को

**के.ई.देवनाथन् :** शाब्दबोधे न भवति किल. प्रत्यक्षे तावत् कालविशेष...

**गो. श्या. म. :** शब्देन उद्दिष्टस्य लक्षणे अनुवादो भवति न वा? लक्षितस्य परीक्षायाम् अनुवादो भवति न वा?

**कृष्णमूर्ति शास्त्री :** अनुवादो ज्ञातस्य अज्ञातविषयबोधनप्रयोजनकः. ज्ञातम् अनूद्य अज्ञातं बोध्यते.

**गो. श्या. म. :** अनूदितस्यापि पुनः धर्मान्तरेण बोधने प्रामाण्यं भवत्येव तत्र मम अभिप्रायः.

**कृष्णमूर्ति शास्त्री :** अनूदितस्यापि प्रामाण्यं स्वतो अनूदितत्वेन रूपेण न. अनूदितम् उद्दिश्य तदनन्तरं कश्चन विशेषो यदि विवक्ष्यते तदानीमेव प्रामाण्यम्.

**गो. श्या. म. :** तस्मादेव अनूदितानूदितयोः तादात्म्यम् अंगीकार्यम् नात्यन्तिको भेदः तत्र भवितुम् अर्हति.

**कृष्णमूर्ति शास्त्री :** अतएव स्मृतिसाधारणन्तु प्रमात्वं न अनधिगतार्थज्ञापकत्वमेव तत्तु अबाधितार्थविषयकत्वमेव. इति पक्षान्तरमपि स्वीकृतम्. अनधिगतत्वे आग्रहो नास्ति. अधिगतोऽपि विषयः स्मृत्यादि प्रमारूपएव इति यदि स्वीक्रियते तदानीम् ''अबाधितार्थमात्रविषयकत्वं प्रमात्वम्'' इति लक्षणान्तरं स्वीकृतमेव.

**बलिराम शुक्ल :** प्रत्यभिज्ञाविषये तेषां मते का स्थितिः?

**कृष्णमूर्ति शास्त्री :** तत्र नामविशेषविशिष्टतया ज्ञायते इति उक्तं खलु.

**बलिराम शुक्ल :** तत्र अनधिगतत्वन्तु नास्ति.

**कृष्णमूर्ति शास्त्री :** अतएव अन्ते पंक्तिरपि पठिता वर्तते ''पूर्वं यो दृष्टो मया 'गोविन्द'शब्दवाच्यः'' इत्येवं रीत्या...

**बलिराम शुक्ल :** तत्पदवाच्यत्वेन.

......+......

## संगोष्ठ्युत्तरलेखनम्

**गो.श्या.म.**

समादरणीयैः श्रीकृष्णमूर्तिशास्त्रिमहाभागैः भाट्टमीमांसाम् अधिकृत्य प्रस्तुतम्

आलेखपत्रम् इदं मध्ये-मध्ये प्राभाकारमीमांसामपि तुलनया विशदीकरोति. अतीव सरलया भाषया मीमांस्यस्य सर्वस्यापि विषयस्य अवितथावबोधकेन लेखनेन सर्वेऽपि विचारगोष्ठीसहभागिनः शास्त्रिमहाभागानां भृशम् अधमर्णाः सञ्जाताः !

ममतु संगोष्ठ्युत्तरलेखनम् इदं यत् किमपि वाल्लभमतदृष्ट्या अस्मिन् विषये विवक्षितं तदावेदकमेव.

तत्र तावत् प्रस्थानभेदेन प्रमाणानां सामान्यस्वरूप-संख्या-प्रामाण्यस्वरूप-स्वतस्त्वपरतस्त्वविषयेषु बहवः प्रभेदाः उपलभ्यन्ते. तत्र प्रथमे तावत् सामान्यस्वरूपविषये प्रस्थानरत्नाकरकृद्भिः **''तत्र 'प्रमाण'शब्दो भावव्युत्पन्नो रूढो वा अबाधितज्ञाने बाधयोग्यव्यतिरिक्ते च, करणव्युत्पन्नस्तु तादृशज्ञानकरणे''** (प्रस्था.रत्ना.प्रमा.परि.उ-पकूले) इति व्युत्पादितत्वेन प्रमारूपस्य ज्ञानस्य द्वैविध्यं गमयति. तथाहि कीदृशं ज्ञानं बाधितं कीदृशं वा बाधयोग्यव्यतिरिक्तम् इति विचिकित्सायां न तावत् सर्वमपि ज्ञानं बाधितं बाधयोग्यं वा इति अभ्युपगन्तुं शक्यं, स्वतोव्याहतेः. नापि सर्वमपि ज्ञानम् अबाधितं बाधयोग्यव्यतिरिक्तं वा इत्यपि वक्तुं युक्तं, मरुमरीचिका-रज्जुसर्प-स्वप्नादिज्ञानानां बाधस्य अनुभवसाक्षिकत्वात्, तन्न्यायेन इतरेषामपि बाधयोग्याव्यतिरेकस्य कल्पयितुं शक्यत्वात् च. किञ्च बाधितं बाधयोग्यं वा ज्ञानं प्रमारूपेण ज्ञानेनैव बाधार्हं चेत् तस्य बाधकज्ञानस्यापि अबाधितत्वं बाधयोग्यव्यतिरिक्तत्वं वा कथं निर्धारणीयम्? बाधार्हज्ञानस्य कारणसामग्री-स्वरूप-सफलप्रवृत्तिजननसामर्थ्यादीनां विचारेण उत बाधकज्ञानस्य कारणसामग्री-स्वरूप-सफलप्रवृत्तिजननसामर्थ्यादीनां विचारेण आहोस्वित् तदेकतरावेदितस्य विषयस्वरूपप्र-कारस्य विचारेण?

तदिह श्रीमदाचार्यचरणानां वचनानि प्रथमतो अवश्यावगाह्यानि —

प्रमाणसामान्यस्य कारणसामग्री-स्वरूप-सफलप्रवृत्तिजननसामर्थ्यानां विषये :

''यथा इन्द्रियप्रेरकत्वं मनसः तथा इन्द्रियानुग्राहकत्वं बुद्धेः. बुद्ध्यैव अनुगृहीतानि इन्द्रियाणि पश्यन्ति कुर्वन्ति च. अतएव बुद्धितारतम्येन इन्द्रियज्ञान-क्रिययोः तारतम्यम्. एतत् कार्यानुसारिल-

क्षणम्. 'द्रव्यस्फुरणविज्ञानं' स्वरूपलक्षणम्. द्रव्यस्य घटादेः स्फुरणे सति शब्देन संस्कारेण आलोकेन वा यद् विशिष्टज्ञानम्; यस्मात् केवलं चक्षुषा ज्ञाने तारतम्यं न स्यात्... द्रव्यस्फुरणतारतम्याद् बुद्धिः नानाविधा. संस्कारतेजसोः तुल्यप्रकाशकत्वे विशेषास्फूर्तौ समः संशयो अल्पविशेषस्फूर्तौ उत्कटकोटिकः. 'विपर्यासः'= संस्कारप्राबल्यात् तेजः तदनुगुणमेव धर्मं (तत्र) प्रकाशयति... विपर्यासो भिन्नार्थप्रतिपादकः, क्रियाज्ञानयोः च भिन्नविषयत्वम्— तथाच इन्द्रियसम्प्रयोगजनकक्रियाविषयाद् भिन्नो यो अर्थः तदेकविषयकप्रतिरूपो यो वृत्तिविशेषः सः विपर्यासः—... निश्चयो यथार्थानुभवो, अर्थो हि ज्ञानस्य अर्धम् अंगम्. अतएव स्मृतिः न निश्चयात्मिका अर्थाभावात्. अनुमतिरपि सम्बन्धिव्यवधानेन अर्थजनितैव... शब्दोऽपि निश्चयएव, (धूमादिरूप)धर्म-(सम्बन्धरूप)सादृश्यातिरिक्त-संस्कारजनकत्वात्. शब्देन (परोक्षतया) द्रव्यस्फुरणात् चक्षुषो अपेक्षाभावात् प्रमाणान्तरम्. त्रीण्येव प्रमाणानि... तत् सिद्धार्थवाक्येतु प्रत्यक्षसहकारित्वाप्रत्यक्ष-हेतुत्वमेव. साध्यार्थेतु लौकिके वाक्यार्थे बुद्धिकल्पिते प्रमाणाभावेन अप्रमाण्येऽपि प्रमेयबलात् प्रमाणमेव—लौकिके 'घटम् आनय' वाक्यार्थः प्रयोज्यकर्तृकघटानयनादिक्रियारूपः प्रयोजकबुद्धिकल्पितइति वाक्यश्रवणसमये तस्य अर्थस्य अभावात् प्रमाणरूपज्ञानानुदयः किन्तु ज्ञानमात्रस्य उदयइति प्रमाणाभावेन ज्ञानजनकवाक्यस्य अप्रामाण्येऽपि प्रमेयबलात् प्रयोज्यकर्तृकानयनक्रियादिरूपप्रमेयस्य बलात् प्रमाणमेव. वाक्याद् जातं शाब्दं समर्थप्रवृत्तिजनकत्वात् प्रमाणरूपमेव इति अर्थः. एतेन एतादृशस्थले परतःप्रामाण्यं स्फुटीकृतं ज्ञेयम्. ननु लोकेऽपि संसर्गरूपस्य वाक्यार्थस्य अपूर्वत्वात् प्रमाणबलादेव प्रामाण्यं कुतो न स्वीक्रियते? इति आकांक्षायाम् आहुः—लोके वाक्यार्थो न अपूर्वः वक्तृज्ञानविषयविष-यित्वात् तद्बोधनसमर्थपदसमूहस्यैव प्रयोगात्—तथाच उक्तविधस्य वाक्यस्य सम्भावितविषयकत्वात् तज्जन्यं ज्ञानं सम्भावनारूपमिति तस्य संशये निवेशः. 'अप्रमाण'पदन्तु 'प्रमाण'शब्दस्य नानार्थत्वाभिप्रायेण उक्तम्. 'प्रमाण'शब्दो अबाधितज्ञाने वर्तते बाधयोग्यव्यतिरिक्ते वा".

(सुबो.प्रका.३।२६।२९-३०).

धर्मब्रह्मणोः ज्ञापकं श्रुत्यादिप्रमाणस्वरूपम् :

''अस्मिन् शास्त्रे परिभाषाम् उक्त्वा प्रमाणम् आह 'वेदाः' इति शब्दएव प्रमाणं, तत्रापि अलौकिकज्ञापकमेव तत् स्वतःसिद्धप्रमाणभावं — तथाच प्रत्यक्षादिषु भ्रान्तत्वस्यापि दर्शनात् तेषु नैकान्तिकं प्रामाण्यम्. अतः तानि विहाय आप्तवाक्यत्वाद् वेदादयएव आद्रियन्ते इति अर्थः. ननु वेदादीनां चेत् शब्दत्वेन प्रामाण्यं तर्हि लौकिकेऽपि तुल्यं प्रत्यक्षोपजीवकत्वात् प्रमाणान्तरतौल्यात् च. इत्यतः आहुः 'तत्रापि', नहि अस्माभिः शब्दत्वेन वेदानां प्रामाण्यम् उच्यते अपितु अलौकिकज्ञापकशब्दत्वेन, औत्पत्तिकसूत्रानुरोधात्. तथा सति यथा धर्मे समपरिकरे चोदनैव मानम् एवम् अत्र वेदादिरेव मानम् इत्यतो न तौल्यं नवा प्रत्यक्षोपजीवकत्वम्. नहि वेदोदितो धर्मो वा ब्रह्म वा अन्येन प्रमातुं शक्यते. तयोः तदेकवेद्यत्वस्यैव तन्मीमांसासिद्धत्वात्... परतःप्रामाण्यवादे प्रवृत्तिसामर्थ्यादेव ज्ञानप्रामाण्यग्रहः. तस्यापि सामर्थ्यज्ञानस्य च अन्यतः एवं सति अनवस्थानिवृत्त्यै क्वचिद् विश्रामे वाच्ये अन्ततो गत्वा योगशुद्धान्तःकरणस्यैव प्रमाणत्वं शुद्धस्य सत्त्वस्यैव वा प्रमाणानुग्राहकत्वं स्वीकृत्य तज्जन्यज्ञानस्य स्वतःप्रामाण्यं साधनीयम्''.

(त.दी.नि.प्र.आ. : १।७)

एतेन वाल्लभमते यथार्थानुभवः प्रमा (Theory of correspondence), अनधिगताबाधितार्थगमकं ज्ञानं प्रमा (Theory of coherence), फलाविसंवादिप्रवृत्तिजनकं ज्ञानं प्रमा (Theory of utility) इति पौर्वात्य-पाश्चात्यैः दार्शनिकैः पृथक्-पृथक्तया ये प्रामाण्यनिकषाः अंगीकृताः ते त्रयोऽपि निकषाः वाल्लभमते संकलीकृत्य अभ्युपगताः इति प्रतिभाति.

तत्र सामान्यतः लौकिकप्रमाणानां यथार्थानुभवत्वेन प्रामाण्ये अंगीकृतेऽपि लौकिकप्रमाणानधिगतार्थरूपयोः धर्मब्रह्मणोः वेदादिशास्त्राणां प्रमाजनकत्वरूपं प्रामाण्यन्तु अनधिगताबाधितार्थज्ञापकत्व(Theory of coherence)रूपमेव. एतेन

बाधयोग्यव्यतिरिक्तता द्योतिता. यथाच आहुः भगवत्पादाः श्रीशंकराचार्याअपि **''नच प्रमाणं प्रमाणान्तरेण विरुध्यते, प्रमाणान्तराविषयमेव हि प्रमाणान्तरं ज्ञापयति'', ''अपिच क्वचिद् गौणः शब्दो दृष्टइति न एतावता शब्दप्रमाणके अर्थे गौणी कल्पना न्याय्या सर्वत्र अनाश्वासप्रसंगात्''** (बृह.उप.भा.२।१।२०, ब्र.-सू.भा.१।१।७) इति. तस्मात् प्रत्यक्षादिप्रमाणैः श्रुत्यभिहितार्थबाधकल्पनायान्तु श्रुतिवचनेषु गौणार्थकल्पनाप्रसक्तिः दुर्वारैव. सातु न सम्भवति लौकिकरूपाद्यभावाद्धि ब्रह्म न प्रत्यक्षगोचरं, प्रत्यक्षगोचरहेतुसाध्ययोः कयोश्चिद् व्याप्तिग्रहणाभावात् लिंगाभावात् च नानुमानादीनाम्, आगममात्रसमधिगम्यत्वस्य अभ्युपेतत्वात् च न श्रुत्यादिवचनव्यतिरेकेण धर्मब्रह्मणोः याथार्थ्यावगतिसम्भवनापि. तस्माद् धर्मब्रह्मणोः श्रुत्यादिशास्त्रवचनानां हि इतरप्रमाणानधिगताबाधितार्थज्ञापकत्वेन स्वतएव प्रामाण्यम् अवसीयते.

सति चैवं प्रमाणसामान्यानां प्रामाण्यन्तु यद् याथार्थ्यरूपं तत्तु अर्थानतिलंघित्वरूपम् इति अंगीकृतम्. तदेतद् अर्थानतिलंघित्वन्तु प्रत्यक्षादिप्रमाणानां न प्रमोत्पत्तिसाधारणकारणसामग्रीजन्यं स्वतःप्रामाण्यरूपं किमुत परतएव ग्राह्यम्. तद् उक्तं सुबोधिनीप्रकाशकारैः **''जन्यज्ञानस्य अर्थसापेक्षत्वाद् अर्थो ज्ञानस्य अर्द्धम् अंगम्''** (सुबो.प्रका.३।२६।३०) इति. एतेन अतिदूरादिग्राह्यार्थदोषाणां इन्द्रियघातमनोनवस्थानादिसाक्षादर्थग्राहकदोषाणां अज्ञानसंशयभ्रान्तिजनकबुद्धिगतताम-सराजसावस्थादोषाणां च सम्भवे ग्राह्यार्थोल्लंघिता जन्यानां ज्ञानानां न अस्वाभाविकी. तस्मात् तत्र याथार्थ्यमेव प्रामाण्याधायकम्. श्रुत्यादिवचनतो ज्ञायमानं जगतो ब्रह्मोपादानकत्वादिकन्तु सर्वभवनसमर्थस्य ब्रह्मणो अप्रतिघसंकल्पेन प्रादुर्भूतानां नाम-रूप-कर्मणां **''सत्त्वेव... इदम् अग्रे आसीद् एकमेव अद्वितीयं तद् ऐक्षत बहु स्यां प्रजायेय''** (छान्दो.उप.६।२।१) इति वचनात् सदात्मकत्वरूपं, तेन तेषां ब्रह्मात्मकत्वमपि ब्रह्मणो हि अद्वितीयैकत्वबोधनात्. तद् ब्रह्मातिरिक्तस्य अर्थस्य अभावादेव श्रुत्यादिवचनैः प्रतिपाद्यमानं सर्वस्य जडजीवात्मकस्य जगतो ब्रह्मात्मकत्वं विधेयांशे लौकिकप्रमाणैः पूर्वानवगतमपि सद् उद्देश्यांशेतु ततः पूर्वमपि अधिगतमेवेति एतादृज्ज्ञानं न अर्थजन्यं, यस्माद् अर्थजन्यत्वे श्रुत्यादिवचनप्रवृत्तेः प्रागपि जगतो ब्रह्मात्मकत्वं समवबुध्येत, अतो श्रुत्यादिशब्दजन्यमेव. श्रुत्यादिवचनैस्तु

उद्दिष्टस्य जडजीवात्मकस्य प्रपञ्चस्य पूर्वसिद्धस्यैव **"ऐतदात्म्यम् इदं सर्वं स आत्मा तत् त्वम् असि"** (छान्दो.उप.६।७।७) इति वचने इदमा निर्दिष्टस्य जडजगतो ब्रह्मोपादानकत्वेन ब्रह्मात्मकता 'त्वं'पदोपलक्षितानां निखिलानां जीवात्मनां च ब्रह्मांशत्वेन ब्रह्मात्मकता उपदिष्टा. तस्माद् ब्रह्मात्मकत्वबोधनेन ब्रह्माज्ञानरूपावरणनिवारणमात्रांशएव प्रमाकरणानां चारितार्थ्यं केवलाद्वैतवादवद् वाल्लभमतेऽपि सुप्रतिपाद्यम्. तस्मादेव नाम-रूप-कर्मणां द्वैतावबोधकानि **"त्रयं वा इदं नाम रूपं कर्म... ब्रह्म एतद्धि नामानि... रूपाणि... कर्माणि बिभर्ति तदेतत् त्रयं सद् एकम् आत्मा आत्मा उ एकः सन् एतत्त्रयम्"** (बृह.उप.१।६।३) इति श्रुत्यादिवचनानि न ज्ञातज्ञापकत्वेन स्वार्थे अप्रमाणरूपाणि नापि पूर्वासिद्धज्ञानजनकान्येव वा, निखिलस्य ब्रह्मात्मकस्य जडजीवप्रपञ्चस्य ब्रह्मत्वेन अनवबुद्धस्य ब्रह्मात्मकत्वबोधनपरत्वात्.

तस्माद् यत्र किञ्चित् प्रमेयं केनचिद् एकनैव प्रमाणेन बोध्यं न तदतिरिक्तप्रमाणगोचरं तत्र प्रमाणस्य अनधिगतार्थज्ञापकत्वमेव आस्थेयम्.

यत्र पुनः कश्चन पदार्थः नैकप्रमाणैः अवगम्यते तत्र प्रथमप्रवृत्तस्य प्रमाणस्य प्रामाण्ये याथार्थ्यमेव निकषं वेदितव्यं, यथाहि लौकिकेन्द्रियगोचराः बहवः पदार्थाः. तथाहि गन्ध-रस-रूपादीनां तन्मात्रारूपधर्माणां घ्राणरसनाचक्षुरादीन्द्रियमात्रग्राह्यत्वेऽपि तद्धर्मिरूपाणां पृथिव्यपतेजआदीनां हि अनेकेन्द्रियग्राहचत्वम् उपलभ्यतएव. तत्र एकेन केनचिद् इन्द्रियेण अपरेन्द्रियविसंवादिज्ञानजनने न अनधिगतार्थज्ञापकत्वशपथेन तादृगनुभूतौ प्रामाण्यपरिग्रहः शक्यो, यथा मरुमरिचिकायां जलरूपदर्शनस्य जलपान-जलावगाहन-रूपफलजननासामर्थ्येन तद्विसंवादितया प्रामाण्यबाधः. यतोहि यद्देशकालावच्छेदेन प्रथमप्रवृत्तस्य जलरूपविषयकस्य ज्ञानस्य तद्देशकालावच्छेदेनैव जलपान-जलावगाहनाशक्यत्वेन विसंवादितया प्रामाण्यबाधावगमात्. तथाच एतादृशे विषये यस्य कस्यापि ज्ञानस्य बलवत्प्रमाणाविसंवादितयैव प्रामाण्येन भवितव्यं नतु मिथो विसंवादितया इति.

तत्र अन्येन प्रमाणेन विसंवादइव स्वतो विसंवादोऽपि प्रामाण्यनिरासकइति

एतेनैव हेतुना ब्रह्मणि सर्वेषां श्रुतिवचनानां समप्रामाणत्वेन तेषां मिथो विरोधपरिहारायैव महर्षेः बादरायणस्य ब्रह्मसूत्रेषु समन्वयाविरोधोपपादने भरः. तथाच प्रथमप्रमाणावगतस्यापि द्वितीयादिज्ञानैः सन्देहास्पदतायाः भ्रमास्पदतायाः शक्यत्वेन बहुतरप्रमाणसंवादाद् बलवत्तरप्रमाणाद् वा संवादितयैव प्रामाण्यम् अंगीकार्यम्. तस्मादेव प्रत्यक्षानुमित्योः धर्मब्रह्माभावसाधकत्वसम्भवेऽपि आगममात्रसमधिगम्ययोः तयोः धर्मब्रह्मणोः आगममात्रसमधिगम्ये स्वरूपे न प्रत्यक्षानुमित्यादिप्रयुक्तबाधयोग्यतासम्भावनापि, आगमेतरप्रमाणागम्यत्वादेव. न तस्माद् विसंवादितापि. तस्मादेव अबाधितत्वरूपप्रामाण्यवद् बाधकज्ञानत्वेन सम्भावितानां प्रमाणानां कारणसामग्री-स्वरूप-सफलप्रवृत्तिजननसामर्थ्योपरोधविचारेण बाधयोग्यव्यतिरिक्तत्वरूपं प्रामाण्यमपि अंगीकार्यमेव.

इदञ्च यथा धर्मब्रह्मणोः तथैव मधुगुडयोरपि प्रत्यक्षमात्रैकगम्ये माधुर्यभेदेऽपि अंगीकर्तव्यमेव. तथैव अनुमित्येकगम्ये सूर्यादिग्रहपिण्डानां परिमाणेऽपि बोद्धव्यम्. नहि शतशोऽपि जनानां प्रत्यक्षगृहीताल्पपरिमाणज्ञानेन विसंवादितायाः शपथेन अनुमानैकगम्यस्य सूर्यादिग्रहपिण्डानां बृहत्परिमाणस्य बाधः सम्भवति.

यथाच प्रमाणानाम् इदम् याथार्थ्यापरपर्यायम् अर्थानतिलंघित्वं, अनधिगताबाधितार्थापरपर्यायं च मिथो असंवादित्वं तथैव सफलप्रवृत्तिजननसामर्थ्यरूपं प्रामाण्यमपि अकामेन अंगीकार्यमेव. तत्र हेतुः उपरितनयोः आचार्यवचनयोः अधोरेखांकनेन सूचितएव.

अथ इदानीं प्रमाणसामान्यसंख्याविषये यथा प्रत्यक्षानुमितिशाब्दभेदैः "**त्रीण्येव प्रमाणानि**" इति उपलभ्यते तथा धर्मब्रह्मसम्बन्धिसकलमीमांस्यविषये "**प्रमाणम् आह 'वेदाः' इति शब्दएव प्रमाणं, तत्रापि अलौकिकज्ञापकमेव तत् स्वतःसिद्धप्रमाणभावम्**" इत्यपि आचार्यवचनं विराजतएव. एवंहि वचनद्वयी वरीवर्त्यते. तत्र प्रत्यक्षस्यापि लोके प्रामाण्यं बुद्धौ सत्त्वगुणोदयएव अभ्युपगतमिति सत्त्वसहिता बुद्धिः प्रमाणम् इत्यपि निश्चप्रचम्. तदेतद् व्यावहरिकमपि सत् न अपारमार्थिकम् इति वाल्लभवेदान्तरहस्यमपि न जातु विस्मरणीयम्.

एतनैव प्रामाण्यस्वरूपं तेषाञ्च स्वतस्त्वपरतस्त्वे च अर्धजरतीयन्यायो अभ्युपेयते इति प्रस्थानरत्नाकरे ''**साध्यार्थलौकिकवाक्यप्रयोगकाले भाविन्याः क्रियायाः** असत्त्वेन जायमानस्य **ज्ञानस्य** क्रियाकर्मादिसंसर्गाग्रहएव जननात्... **तस्य** ज्ञानस्य **प्रमाणलक्षणानाक्रान्तत्वेन** तादृशस्थले **ज्ञानग्राहकसामग्र्या** यः **प्रामाण्यग्रहः** सो **अयथार्थः... अतः ईदृशस्थले परतो अन्यत्र स्वतः** इति **अर्धजरतीमेव** युक्ताम् **उत्पश्यामः**'' (प्र.र.प्रमा.कर.तरं.६) इति प्रतिपादितम् अत्र अनुसन्धेयम्. इति अलम् अतिपल्लवितेन.

पुनश्च सुगृहीतनामधेयैः श्रीकृष्णमूर्तिशास्त्रिमहाभागैः भाट्टमतरीत्या यत् प्रत्यक्षविवरणं कृतं तेन तेभ्यो भृशं स्वकार्तज्ञ्यज्ञापनपुरःसरं प्रस्तुतं मदीयं संगोष्ठ्युत्तरलेखनं समापयामि.



Dr. P. K. Mukhopadhyay, Kolkata

... How then Pratyakṣa may Pramāṇa? For, when I say that "I perceive a jar" is it that jar I perceive? For, perception is possible only through the contact of the sense organ with the object. But my senses are in the contact with the front portion of the jar, front portion of the tree. But there is other part of the tree with which my sense organ is not there in contact. For, there is Vyavadhāna. So therefore, my senses are never in contact with the object at all. My senses are in contact with the part of the object. So if I say, 'I perceive the branch' that might have make sense but not if I say 'I perceive the tree'. But the same problem can be raised with reference to branch also. For that also is the problem. So this problem is not that I am conducting it. This problem is there very much and this we ignore.

This problem was raised by Gauttama in his Nyāyasūtra as a Pūrva-pakṣa. He says "pratyakṣānumānam, asamagra-grahaṇāt". We can not perceive, we can not take the whole of it. But the answer he provided is beautiful. His first answer is "pratyakṣena yāvat tāvad upalabhyate". You are saying that you perceive the part of it, so perception is Pramāṇa.

If you can not perceive the whole, at least part you say you are perceiving. So perception is Prāmāṇa. How can you say that it is not Pramāṇa and it is Anumāna? This is the first question. And that is the route of the distinction between what you call phenomenalism and realism. In the west ... theory of perception. And our Indian parallel is what we call Punjavāda v/s Avayavīvāda.

In the Punjavāda theory, we can never know the object as a whole but only the sensible qualities like Rūpa, Rasa, Nīla-Pīta etc. You can never know the physical object. But then there are two possibilities. One, since, you perceive only the sensible qualities, you say that only sensible qualities are real and nothing else is there. This is call reductionism. They say that dravyasya antarbhāvḥ indriya-guṇādau. Sensible qualities are the things and nothing more is there. In the similar way, in the west also, scientists have divided into two groups. They says, science basically is an empirical theory of the observable universe. Now, since, its an empirical theory, it is based only on the evidence of perception. And just now we have seen that the perception is the evidence for the sensible qualities only. And they say that there is nothing over and above the sensible qualities. These are the phenomenalists. And now there is a great problem with the

scientists whether they go with phenomenalism or with realism.

One very familiar story that much of science I know I can tell you also. That Einstein was at one time of his life very much under the influence of Ernst Mach. And he was a Humian who was a Phenomenalist. Later on he was objecting to some form of Machianism, he was reminded that how you say, you yourself were a positivist few year back. And his reply was very beautiful. He says, even a good joke should not be repeated too many times. So he was a realist. And the problem is this that can we have any evidence for admitting over and above the sensible qualities of the physical object. And this bring me back to the second part of Gauttama's answer. In the first part he says, after all as the knower of as a means of knowledge of the sensible qualities there is Pratyakṣa. So you can not simply say that there is no Pratyakṣa, only Anumāna is there. But the second part is this, even if you say that knowledge of physical object then also he says that knowledge of physical object is also a perception. How that is possible? He says, when you think that we only perceive the front part of it and not the second part of it, you are taking that the thing is composed of certain parts only. But we are Avayavavādins. Avayavī is something distinct entity. Its a unity, its a distinct

entity and it is in every part of it. So therefore, unless we accept Avayava, we can not ... this issue that Pratyakṣ is not a Pramāṇa= Pratyakṣm anumānameva. A Pratyakṣa or we can say that a perception of a tree or a jar, they will become inference, we can not answer this charge unless we admit Avayava in addition to the Puñjas. So therefore, it becomes very necessary from the Nyāya point of view. You have very good answer to the question why there should be a perception and perception is as much a direct form of knowledge and not just interpretation. And how is it that with the help of the sense organs we can know not only the sensible qualities but also the physical objects as such. So therefore this particular approach is totally absent in the western tradition. So all that they could do by way of refuting phenomenalism and establishing realism is as Prof. Bokil was expounding the other time that we can not reduce a physical object statement in to the sense-data statement. But that in addition to this we can have a real argument by admitting Avayavī that is simply unknown to them. Here we can enter into discussion in the theory of perception with our western counterpart and particularly the scientists who depend on this perceptual knowledge of that.

Now I will try to touch upon ... most of the division

we find in Prasthānaratnākar is, so to say ... each other. So it creates lot of trouble. But if you accept only one principle of division and you go by that ... but there are too many principles are given and too many different ways of defining it and that creates problem sometimes. I give one example. It is said that one time of knowledge, not Jñāna as such, perhaps Anitya Jñāna. That division is like this. Saṁśya, Niścaya, Viparyāsa, Smṛti, Swapna like that. But the problem is this that how a cognition be other then both Niścaya and Saṁśya? For first, if we say that Niścaya-Aniścaya bhedena dvairaśrayameva ... Niścayāniścaya virodhe hi na prakaranta-sthitiḥ. So if something is not Niścaya then it must be Aniścaya. Then either he say Viparyaya is Aniścaya or say it is Niścaya. But none he said in this scheme. In this scheme it is neither Aniścaya nor Saṁśya, it is a third category. So his fivefold division we can not reduce immediately into the twofold divisions. So, division or classification by logical division, with which we are rather familiar of ...ing. E.g. first we distinguish Jñāna into Smṛti and Anubhava. Then Anubhava in to Sakṣāt and Parokṣa. And then each time we have Dvairaśraya. That is possible but here that is not possible. And therefore, this ... for two or distinction of Pramā-Apramā also. But that I will discuss currently.

How do you define Pramā and that is a very difficult problem also. I have some questions which I will raise and then discuss something. One is this, the principle of distinction is this that Sātvika-jñāna is Pramạ and Niścaya is also Pramā. But when Niścaya is said to be Pramā, it is said to be Sātvika-rājasa. So both the things have been said. That creates problem of classification.

My other question is this, suppose we say Sātvika-rājasa jñāna is Pramā. This Pramā is defined only in the context of Anitya Jñāna and once in the context of Nityajñāna. So should I understand the position of Śuddhādvaita in this sense that Nityajñāna is necessarily Pramā and that is only Sātvika. Whereas, Pramā Anityajñāna is Sātvik-rājas. So that can make somehow a ratiọnal division. But then again the point is this is it possible for any jñāna to be Sātvika only? If we believe that 'jñāna' to mean Vṛtti, whether a Buddhi or not Svarūpabhūta jñāna. The reason is this, Satva-Rajas-Tamas these three they may be there present in different proportion but it is not possible that there is no Rajas, no Tamas and only Ṣatva and so on. This is normally not possible. Abhibhava is possible. So if it is understood that Satva is Pradhāna that is understandable but only Sātvikajñāna is it possible? This is not intelligible to me. This is one problem.

Then, normally substance of Dravya is perceived only by two sense organs: Cakṣu and Tvag Indriya. But in this tradition it is believed that Dravya can be understood by all the sense organs. But that is not the great problem for me. The deeper problem is this how Ghrāṇendriya can perceive Dravya. Some examples have been given. Such as even in the darkness I can say 'I am smelling a rose' that is possible. But problem is this that has been said that Gandhavattvena gandhasya ghrāṇendriyeṇa grahaṇam, Sparśvatvena dravyasya grahaṇam sparśendriyeṇa etc. But come to this question of Gandhavattvena gandhasya ghrāṇendriyeṇa grahaṇam. In our example we can well understand it that how do we perceive the colour present in a Dravya. We say Saṁyukta-Samavāyena dravyavataḥ rūpam gṛahyate. Ko atra āśayaḥ. Indriya-saṁyogaḥ dravye asti. Tad dravye rūpam samavetam. Atra tu dravyena saha na sakṣāt saṁyogaḥ. Tat to gandhena saha. Gandhadvāreṇa dravyena saha yaḥ sambandhaḥ tasya kim svarūpam? Tādātmaym na sambhavati. To my mind first my sense organ is to be in relation to the Gandha. And since that Gandha is there in the Dravya then we can have that relationship. So it should be what relation? It can not be saṁyoga-tādātmya or Saṁyukta-tādātmya. But what it is this question is to be discussed here.

Some of the question I am raising. I have my own

answer to give to them. But basically I am raising some questions.

1. Whether Pratyakṣa can be regarded as an additional Pramāṇa or not ?

2. Whether we have any answer to the question that Pratyakṣ is Anumāna if we do not accept Avayavivāda ? If we accept Avayavivāda how it can be answered I have given. But every system does not accept Avayavivvāda.

3. Whether we can have any Jñāna which is only Sātvika, there is no mixture of Rajas or Tamas at all ?

4. How or what exact Sannikarṣa when we perceive Gandhavattvena dravyam through ghrāṇendriyeṇa ?Is it Tādātmya-tādātmyaor whatever it is.

......+......

## चर्चा

### प्रो. प्रद्योतकुमार मुखोपाध्याय

के.ई.देवनाथन् : You said that Naiyāyika accepts Avayava-avayavivāda and if it is not accepted then the Prāmaṇya of Pratyakṣa can not be established.

प्रद्योतकुमार : How can it be established? What other way is there?

के.ई.देवनाथन् : What I understand by that Bhāṣya, this problem comes if Avayava-avayavivāda is accepted. Question there is like Pratyakṣam apramāṇam, ekadeṣopalabdheḥ. That is the question. Because you Nayāyika accept Avayava-avayavivāda. Therefore, if one part is perceived you think that other part is not perceived. Then Pratyakṣa becomes Apramāṇa. That is the question. The answer is that apart from the perceived part the Avayavī also is there. In that case if a part is perceived, the whole is perceived. This kind of problem does not emerges in those systems who don't accept Avayava-avayavivāda.

वी.एन्.झा : When you say "I see the tree" actually you are seeing only the part of a tree. But your claim is "I see the tree'. Do you say that "I see a part of the tree'? No. Then how do you explain the perception?

के.ई.देवनाथन् : The Bhātta Mīmāṁsakas accepts Bhedābheda. So, if a part is perceived then whole also is perceived.

वी.एन्.झा : So the problem is unless we accept Avayavī how to explain the perception of whole?

के.ई.देवनाथन् : My understanding is that this problem may occur more in Nyāya system. Because, they have accepted Bheda between Avayava and avayavī.

वी.एन्.झा : It can occur with anybody. Because, anybody can ask ...

के.ई.देवनाथन् : It can but Naiyāyikas have to answer this question forcefully. One more thing. You asked that Niścaya, Saṁśya etc. are the kinds of ...

प्रद्योतकुमार : There are five kinds. They can not be reduced to dichotomy.

के.ई.देवनाथन् : According to Naiyāyika it doesn't necessarily mean Niścaya as Samśyabhinnaḥ. Because Niścaya may consist of both Saṁśya in one part and ...

बलिराम शुक्ल : No. No. One single knowledge is Saṁśya or Niścaya? There may be partly doubt. But it is not accepted as a single knowledge.

के.ई.देवनाथन् : It is accepted. General belief of Naiyāyika is Saṁśya is Saṁśya and Niścaya is Niścaya. But in Prāmāṇyavāda Bhattācārya accepts. Both can be ... "Saṁśayatva-niścayatve avyāpyavṛtti-jātiviśeṣau" "संशयत्व-निश्चयत्वे अव्याप्यवृत्तिजातिविशेषौ".

प्रद्योतकुमार : He is saying that actually Naiyāyika can not claim the credit of offering the solution. Actually they are the cause of the problem. But why don't

you notice that it is you ... If the Pūrvapakṣ was that "Vṛkṣabuhiddhiḥ anumiti, avayava-grahaṇāt" then your question would have been all right. But where it is not said "Avayava-grahaṇāt; ekadeś-grahaṇāt". Why they used "ekadeś-grahaṇāt"? And ekadeś-grahaṇa will be equally applicable in the case of Puñja-vāda also. So form the whole Puñja of which only ekadeśa you are taking. So, the same question will in the Puñja-vāda also.

**के.ई.देवनाथन् :** No. In Puñjavāda it is not the problem. Because, if ten Paramāṇū are perceived then the perception will be like "I have perceived this much". Therefore, no Avayavī...

**प्रद्योतकुमार :** Then you can not say that "Ghatam paṣyāmi".

**कृष्णमूर्ति शास्त्री :** ज्ञानं सत्त्वगुणजन्यं कथं राजसम् इति प्रश्ने... जो ज्ञान भगवद्विषयक होता है वह सात्त्विक कहलाता है. जो विषयविषयक होता है वह तामसिक है. विषय और भगवान् को मिलाकर हम जो ज्ञान पा रहे हैं वह राजसिक है. इस तरहका लक्षण तो हो सकता है. अनन्तरम् एकः प्रश्नः अन्ते कृतः किम् एकं ज्ञानं तादृशम् अस्ति यत्र सत्त्व-रजसोः अंशोऽपि नास्ति, शुद्धसात्त्विकम् अस्ति वा? इति. तत् न अस्ति इति उत्तरं गीतायां दत्तम् "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः, सत्त्वं प्रकृतिजैर्युक्तं य एभिः स्यात् त्रिभिर् गुणैः". 'सत्त्वं' नाम न द्रव्यम्. यः

कोऽपि पदार्थ:. अंशत: रजस्तमोगुणसंस्पर्शं विना ... एकएव वर्तते शुद्ध:. इतरत्र तावत् कश्चन संसर्ग: द्वयो: भवेदेव.

**विन्ध्येश्वरी प्रसाद :** श्रीमद्भागवते "वदन्ति तत् तत्त्वविद: तत्त्वं यज् ज्ञानम् अव्ययम्" अत्र 'ज्ञानम्' इति पदेन तत्र भगवानेव गृहीत:.

**कृष्णमूर्ति शास्त्री :** भागवतएव न "सत्यं ज्ञानम् अनन्तं ब्रह्म" इत्यत्रापि भगवानेव गृहीत:.

**प्रद्योतकुमार :** अतो 'ज्ञान'शब्दस्य मया ... 'ज्ञान'शब्देन वृत्ति: उच्यते. तद् वृत्ति: केवलं सात्त्विकरूपं सम्भवति न वा? तत्र रजस्तमस: स्पर्शसम्भव:.

**कृष्णमूर्ति शास्त्री :** मुख्यं ज्ञानं चैतन्यरूपम्. चैतन्याभिव्यञ्जकवृत्तौ ज्ञानत्वम् उपचर्यते. अयन्तु सर्वैरपि अंगीकार्यमेव.

**डी.प्रह्लादाचार :** नैयायिकै: न अंगीक्रियते.

**गो. श्या. म. :** *डाइकोटोमीके प्रिन्सिपल्* के अनुसार किसी भी *टर्म्* को जब *नेगेटिव्* बनाया जाता है तो वह *इन्फाइनाईट्* *टर्म्* बन जाती है. इस स्थितिमें जब संशय और असंशय कहेंगे तो उसमें सब ज्ञान आ जायेंगे. निश्चय - अनिश्चय, विपर्यास - अविपर्यास और इसी तरह स्मृति - अस्मृति कहनेसे सारे ज्ञान आ जायेंगे. तो आपकी जो समस्या है कि *डाइकोटोमी प्रिन्सिपल्* के अनुसार किसी भी *टर्म्* को जब *नेगेटिव्* किया जाता है तब वह *इन्फाइनाईट्* *टर्म्* बन जाती है. यह इस प्रसंगमें ध्यानमें रखना चाहिये. यहां *डाइकोटोमी* नहीं की गई है. उसका एक कारण यह है कि जितने भी वृत्त्यात्मक ज्ञान हैं वे, मैंने पेपरमें

इसीलिये यह बात स्पष्ट कही है, वे शुद्ध चैतन्यरूप नहीं हैं. भागवतमें कहा गया है ''आसीज् ज्ञानम् अथो हि अर्थ एकमेव अविकल्पितम्''. ज्ञान स्वयं ज्ञान और ज्ञेय के रूपमें विभक्त हुवा है. बादमें महत्तत्त्व उत्पन्न हुवा, तदनन्तर अहंकार उत्पन्न हुवा इस तरह सारी सांख्यकी प्रक्रियाको ब्राह्मिकी प्रक्रियाके समन्वित किया गया है. अतः प्रकृति गुणत्रयकी साम्यावस्था होती है और विकृति गुणत्रयकी विषमावस्था. विषमावस्थाका मतलब ही यह है कि कोई एक चीज प्रबल है तो दो चीज निर्बल हैं. और उसीके अनुपातसे सारा विकास हुवा है. लिहाजा ज्ञानोत्पत्ति जहां भी लौकिक प्रक्रियानुरोधी है वहां बुद्धिवृत्त्यात्मक ज्ञान माना गया है. क्योंकि प्रकृतिसे चित्त पैदा हुवा है वह भी त्रिगुणवैषम्यरूप है. और उस चित्तसे जो अहंकार पैदा हुवा है वह भी त्रिगुणवैषम्यरूप है. उससे जो मन पैदा हुवा है वह भी त्रिगुणवैषम्यरूप है. उस अहंकारसे जो बुद्धि पैदा हुयी है वह भी त्रिगुणवैषम्यरूप है. अब जब सभी कुछ त्रिगुणवैषम्यरूप है तब बुद्धि समय-समयपर अपनी उन विषमावस्थाओंको प्रकट करती रहती है. इसलिये सत्त्वमें रजस्, सत्त्वमें तमस्, सत्त्वमें सत्त्व हम ऐसा *स्किमेटिक् इन्टर्प्रिटेशन्* करते हैं. उसके तहत बुद्धिकी वृत्तिसे होनेवाला जो ज्ञान सत्त्वरूप होता है वह एक *जनरल्* बात है. और उसकी *सब्-वेराईटीज़्के* रूपमें सात्त्विक-सात्त्विक, सात्त्विक-राजस, सात्त्विक-तामस इत्यादि आते हैं. इसलिये वहां यह मीमांसा की गयी है. वस्तुतः यह बात

प्रस्थानरत्नाकरकारकी अपनी नहीं है. यह सारा प्रतिपादन महाप्रभु श्रीवल्लभाचार्यने किया है. उन्होंने तो केवल उसका संकलनमात्र किया है. महाप्रभु श्रीवल्लभाचार्यकी एक *पॉलिसी* है कि यह सारा जगत् जो प्रकृतिसे प्रादुर्भूत हुवा है यानि जो भी प्राकृत प्रोडक्ट है वह सारा सत्त्वआदिकी नवविध *वेराईटीज़्* में *एक्स्प्लेईन्* हुवा है. और महाप्रभु प्राय: *पेंडुलम्की* तरह हर सगुणकी निर्गुण *सिच्युएशन्* दिखलाते रहते हैं. ज्ञानकी निर्गुण स्थिति और ज्ञानकी सगुण स्थिति. भावकी निर्गुण स्थिति भावकी सगुण स्थिति. कर्मकी सगुण स्थिति कर्मकी निर्गुण स्थिति. इस तरहकी उनकी *मोडस् ऑपरेन्डी* है. इसके अनुसार उन्होंने कहा है कि ''संशयो अथ विपर्यासो निश्चय: स्मृतिरेव च, स्वाप इति उच्यते बुद्धेः लक्षणं वृत्तित: पृथक्'' इन बुद्धिवृत्तियोंमें गुणवैषम्यकी कैसी *वेराईटीज़्* और *सब्-वेराईटीज़्* प्रकट हो रही हैं. यह मूल बात है.

**प्रद्योतकुमार :** That is not my problem. All this is well understood and there is no problem at all. For everything that comes from Pṛkṛti must be Triguṇātmaka.

**वी. एन्. झा :** शुद्धचैतन्यविषयक वृत्तिज्ञान सम्भव है?

**गो. श्या. म. :** सम्भव है. प्रकृतिमेंसे सबसे पहला परिणाम महत्का हुवा है. महत् समष्टिभूत चित्त है और व्यष्टिभूत चित्त हम सबमें है. उस चित्तमें सुषुप्तिसाक्षिक, जिसे ''गाढं मूढो अहम् आसम्, न किञ्चिद् अवेदिषम्'' या ''सुखम्

अहम् अस्वाप्सं, न किञ्चिद् अवेदिषम्'' ऐसे, केवलाद्वैती कहते हैं. इसमें आत्मसाक्षात्कार चित्तसे होता माना गया है. वह सुषुप्तिसाक्षिक चैतन्यका अन्तःकरणजन्य ज्ञान चित्तमें उत्पन्न होता है. वह बुद्धिसे नहीं होता है. क्योंकि उस समय बुद्धि निद्रावृत्ति अपनाये हुवे होती है. अहंकार और मन भी सो जाते हैं केवल चित्त जाग्रत रहता है. पर जब अहंकार और मन जाग्रत होते हैं और बुद्धि तामसी वृत्तिके साथ तब धीरे-धीरे स्वप्न आने लगते हैं. और जब इन चारोंके अन्तर्गत बुद्धि निद्रावृत्तिका त्याग कर देती है तब हम पूर्णतया जग जाते हैं. यह जाग्रत अवस्था है.

**वी. एन्. झा :** ...अंशी उसका विषय कैसे हो सकता है? ...शुद्धचैतन्यवाला...

**गो. श्या. म. :** शुद्ध चैतन्य एक तो पारमात्मिक अंशी रूपमें है. वह तो हमें अनुभूत होता नहीं है. पर अंशरूपसे जो हमारे अंदर मौजूद है वह भी शुद्धचैतन्य है, उस शुद्धचैतन्यको अर्थात् जीवात्मचैतन्यको चित्तद्वारा विषय बनाया जा सकता है. ''स्वमपीतो भवति'' ''स्वं हि तदा अपीतो भवति''.

एक बात मैं और कहना चाहूंगा कि आपने अवयवीका जो प्रश्न उठाया उसके बारेमें महाप्रभु श्रीवल्लभाचार्यका दृष्टिकोण पुनः अर्धजरती है. बहुत सारी बातोंमें हमारे यहां अर्धजरतीवाला दृष्टिकोण अपनाया गया है. क्योंकि मूल तादात्म्यमें ही कुछ अर्धजरती है, भेदाभेदके बीचमें.

तो जहां-जहां भी हमारे सामने कोई अतिवादी बात आती है तो हम उसका समाधान अर्धजरतीसे करते हैं.

अवयव-अवयवीकी बातके बारेमें महाप्रभुका एक वचन है ''उपचितैः अवयवैः संहतो गुप्तो अवयवी प्रकटो भवति''. देखो! अर्धजरती है : अवयविवाद और पुञ्जवाद में. यह सत्कार्य और सत्कारणवाद को छोड़ कर नहीं. संघातवाद और द्रव्यवाद की अर्धजरती महाप्रभु कर रहे हैं. और इस न्यायसे यदि आप देखेंगे तो हमारे यहांके द्रव्यका भी विलक्षण स्वरूप है. हम द्रव्यको ऐसे नहीं मानते हैं कि द्रव्य शुद्ध अवयवी है और ''उत्पन्नं द्रव्यं क्षणम् अगुणम् अक्रियं च तिष्ठति'' और बादमें गुण उत्पन्न होता है. उसके बारेमें भी हमारा यह दृष्टिकोण है कि तन्मात्रायें संहत होकर घनीभूत होकर द्रव्य बन जाती हैं. तो किसी तन्मात्राका आपने प्रत्यक्ष किया है वही तो घनीभूत हो कर द्रव्य हो रही है. अर्थात् शब्दतन्मात्रा घनीभूत हो कर आकाश है. रूपतन्मात्रा घनीभूत हो कर तेज तत्त्व है. और गन्धतन्मात्रा घनीभूत हो कर पृथ्वितत्त्व है. इस तरहसे घनीभावका भी हमारे यहां सिद्धान्त है जो कि संघातवादकी अर्धजरती है. और फिर उस द्रव्यको हम बौद्धोंकी तरह शून्य नहीं मानते. हम कहते हैं कि वह वहां छिपा हुवा था सो वहां प्रकट हो गया. ''द्रव्यं कर्म च कालः च स्वभावो जीवएव च वासुदेवात् परो ब्रह्मन् नच अन्यो अर्थो अस्ति तत्त्वतः''. तो द्रव्यात्मक

बी. के. दलाई : Firstly, you suggested that it can not be an influence of Nyāya but I am thoroughly convinced that it is an influence of Nyāya. Because seeing their development that they are following our pattern. They are using Indriya, Artha, Sannikarṣa ...So, definitely Akalanka was consistent that Indriya pratyakṣa cannot be Parokṣa, hence for him there was no other way than accepting two kinds of Pratyakṣa[Post-script].

प्रद्योतकुमार : OK. we shall come on this question some other time. Next question.

वी. एन्. झा : Do you find any argument for accepting Nirvikalpaka Pratyakṣa? What they call it Vyañjanāvagraha?

---

Post-script : This problem is already raised in the tradition, and answered to as well. When we use the expression "प्रत्यक्षं परोक्षम्", the word 'Pratyakṣa' conventionally means the knowledge derived through sense organs which is 'Pratyakṣa' according to all systems of Indian Philosophy. But the Jainas following Āgamic tradition accepts this as Parokṣa. The objection is how Pratyakṣa is Parokṣa. If knowledge arising from sense-perception is Pratyakṣa, how to account for the views of those who called it Parokṣa. The answer has been given in Syādvādaratnākara (II.I) "आद्ये परोक्षम् इति तत्त्वार्थसूत्रे मति-श्रुतद्वयं परोक्षं भणितं भवति. कथं प्रत्यक्षम्? ... मतिज्ञानं परोक्षमपि प्रत्यक्षज्ञानं तथा स्वात्माभिमुखं भावश्रुतज्ञानमपि परोक्षं सत् प्रत्यक्षं भण्यते" (द्रव्यसंग्रहवृत्ति ५)

"कथं पुनः एतेषां प्रत्यक्षराद् वाच्यत्वम्? रूढितः इति ब्रूमः" (न्यायदीपिका २).

बी. के. दलाई : Yes. There is no systematic argumentation. Even the definition is lacking. Till Akalanka there was no definition. And they say that when Indriya comes in to contact with the object, it gets some awareness like Sattāmātra or Sanmātra jñānam. And that can be equated with Nirvikalpak. They have never used such term. Thye say it is Vyañjanāvagraha.

वी. एन्. झा : Arthāvagraha is produced by Vyañjanāvagraha?

बी. के. दलाई : Yes. But they have no argument in favour of accepting Nirvikalpaka.

बलिराम शुक्ल : They have followed that argument of Naiyāyika.

बी. के. दलाई : That is my supposition.

प्रद्योतकुमार : That I am ready to accept but you can't make me believe that Naiyāyika thought them contradiction.

अम्बिकादत्त शर्मा : प्राय: सभी दर्शन निर्विकल्पककी चर्चामें 'सन्मात्र' शब्दका प्रयोग करते हैं. 'सन्मात्र'का अर्थ जैन दार्शनिक जिस अर्थमें स्वीकारते हैं वही अर्थ क्यों स्वीकारा जाय? क्यों नहीं केवलाद्वैतियोंके या शुद्धाद्वैतियोंके अर्थका स्वीकार किया जाय? जैनियोंके ही अर्थको स्वीकारनेमें जैनदर्शनकी क्या युक्तियां होंगी? दूसरी बात यह है कि स्वयं प्रत्यक्षकी निर्विकल्पकता किस प्रकारके सन्मात्र अर्थको समर्थन देता है? यह विचारणीय है. क्योंकि सभी लोग 'सन्मात्र' शब्दका प्रयोग करते हैं. किन्तु उसके अर्थोंमें परस्पर आत्यन्तिक भेद है. 'सन्मात्र' कहनेसे बौद्धोंका स्वलक्षण, अभेदत्व, शुद्धाद्वैतका पक्ष, जैनोंका स्वलक्षण भी आ जाता है.

**प्रद्योतकुमार :** सभी दर्शनोंमें "सन्मात्रविषयकत्वं निर्विकल्पकत्वम्" तो कहा नहीं गया है. न्यायमें ऐसी कोई बात नहीं है.

**अम्बिकादत्त शर्मा :** अभिप्राय यह है कि निर्विकल्पक प्रत्यक्षके विषयमें जब विभिन्न सम्प्रदायोंमें मतभेद है और जो-जो सम्प्रदाय निर्विकल्पक प्रत्यक्षको स्वीकारते हैं उनमें उसके विषयमें आत्यन्तिक भेद है तो स्वयं प्रत्यक्षकी निर्विकल्पकता किस प्रकारके विषयका प्रस्ताव करती है?

**गो. श्या. म. :** आपके प्रश्नको मैं इस तरहसे प्रस्तुत करना चाहूंगा कि जैनोंका जो सन्मात्रावगाही निर्विकल्पक है वह सत् ऐकान्तिक है अथवा अनैकान्तिक है?

**बी. के. दलाई :** जैनन्यायमें पांचवी शताब्दिके बाद जो ग्रन्थ लिखे गये हैं उनमें निर्विकल्पक प्रत्यक्षकी बात है ही नहीं. कारण यह है कि उनके प्रत्यक्षके लक्षणमें निर्विकल्पकका कोई स्थान ही नहीं है. इसीलिये अवग्रह, ईहा, अवाय आदि जो चार स्टेज् हैं वो सब सविकल्पक प्रत्यक्ष हैं. यह एक बात हुई. दूसरी बात, अब आप आगमको पकड़ें. आगममें यद्यपि 'निर्विकल्पकप्रत्यक्ष' शब्द नहीं आता है लेकिन वह विषय चर्चित है. उन्होंने वहां उसको सत्य या सत्ताजाति के अर्थमें नहीं लिया है, "इदं किञ्चित्" इस अर्थमें लिया है. और आपने पूछा कि वह सत् ऐकान्तिक है कि अनैकान्तिक तो जैन सिद्धान्तमें तो आप कुछ भी पूछेंगे तो वो दोनों बातोंको रखेंगे कि इस दृष्टिसे ऐसा है और इस दृष्टिसे ऐसा है.

**गो. श्या. म. :** जैन अनेकान्तमें मानते हैं यह बात तो समझमें आती है. पर मेरे प्रश्नका आशय यह था कि जब जैन दर्शनमें निर्विकल्पक प्रत्यक्ष माना गया है तब सन्मात्रकी अनुभूतिमें उसके पर्यायोंकी भी अनुभूति होती है या केवल द्रव्यकी अनुभूति होती है यह स्पष्ट होना चाहिये.

**बी. के. दलाई :** केवल द्रव्यकी अनुभूति होती है.

**गो. श्या. म. :** यदि केवल द्रव्यकी अनुभूति होती है तब उसमें सातों भंगिमाओंका अनुभव होता है कि उनमेंसे केवल "स्याद् अस्ति"का ही अनुभव होता है?

**बी. के. दलाई :** इसका निर्णय तो हम नहीं कर सकते हैं.

**प्रद्योतकुमार :** Don't say that. This is a very good question. You have to pay attention to it. केवल "स्याद् अस्ति" इतना ही ज्ञान होता है कि नहीं इसका उत्तर सीधा-सीधा देना चाहिये.

**बलिराम शुक्ल :** इतना ही होगा.

**प्रद्योतकुमार :** तब तो सप्तभंगीका सिद्धान्त ...

**बलिराम शुक्ल :** वहां सप्तभंगी नहीं है.

**यज्ञेश्वर शास्त्री :** सप्तभंगी आयेगा तो सविकल्पक हो जायगा.

**गो. श्या. म. :** सविकल्पक हो जायगा वह तो ठीक बात है पर मेरी समस्या यह थी कि निर्विकल्पकप्रत्यक्षमें केवल "स्याद् अस्ति"का ही यदि अनुभव होता है तब फिर उसको पारमार्थिक नहीं माना जा सकता है. तब फिर जैनसिद्धान्तानुसार वह बात मिथ्यादृष्टिमें चली जायगी.

**एस्. वी. बोकिल् :** One thing which is unique about the Jaina system seems to me is that they talk about the knowledge of other's mind which other systems do not do. No other system I have come across presents a discussion of a problem of other minds. They speak of Manḥparyāya which is mentioned as a kind of Mukhya Pratyakṣa. But I do not know how they really treat this Manḥparyāya as Mukhya Pratyakṣa. It is quit clear that we know other minds. We understand their thoughts. We

know that some one is undergoing pain. Now this is not a matter of direct perception. This is not a sensuous perception. This is a matter of inference. And therefore we shell not make any gain by just describing as direct perception or Mukhya Pratyakṣa. The Jaina thinkers will have to think carefully about it that it is a matter of inference. And even when its a matter of inference, you can not put it at such a level that it is not possible for the ordinary people. It seems to me that Manaḥparyāya can be had by a very special category of people. This is not the case.

बी. के. दलाई : You suggested that it should be inference and not Pratyakṣa. But, Jainas have built their system in such a manner that they have to tell it Pratyakṣa and that too Pāramārthika. The definition they give is that "परमनोगतार्थविषयं मनःपर्यायम्" So, as I said, soul has developed to such a stage that it can read others mind you gave a practical example. But that is an external thing. You see the Linga and go to infer the Sādhya. But Jainas are not accepting this view. They say that soul develop, like Yogī, such a higher extent that by even closing their eyes, without any contact they can read not anybody's mind but minds of everybody. And even they have accepted various stages of Manaḥparyāya. So we can not say that its an inference, it has to be Pratyakṣa, and not only Pratyakṣa, Mukhya

Pratyakṣa.

एस्. वी. बोकिल् : Surely you don't mean by Manḥparyāya Jñāna as telepathic knowledge. You mean that its a knowledge which can be had by anyone who is living in human society.

प्रद्योतकुमार : It is not that there is no recognition of the fact that we can, in Indian system, know others mind. Not even it is the case that we do not admit that we can have knowledge of others mind directly. And thirdly, we can have also knowledge of others mind by a person who is not explicitly a Yogī. This is call Prātibha Jñāna. This kind of knowledge has many many uses. And there are many textual evidence where it has been said that even a small girl or boy says "Me bhrātā āgamiṣyati" and actually his brother comes next day. So, this kind of cognition is possible. But, mostly it is inferential according to Naiyāyika. But even when you say Manḥparyāya, one point Dr. Dalai has made very clear, that it is not the perception of other's mind. It is the perception of the stage of other's mind. Para-manogata-dharma. And lastly, you started with the assumption, which is very risky, you said we all have the knowledge of other's mind. So, how is it that only Jaina accept it ?

एस्. वी. बोकिल् : This is a condition of our living in a society that we have knowledge of other mind. We can not live in society if we are not able

to read the mind of others.

**प्रद्योतकुमार :** Most of the thing we assume. E.g. we go on when we utter a sentence. Not a single sentence do you utter which gives full description of the event that is described. But still we go on conversing. So for the purpose of conducting our daily business it is not necessary that we have complete knowledge nor it is necessary that we should have direct knowledge of all the things that we believe. So, all these beliefs are not of practical usage. But even as a matter of final attainment, then it has to be complete, it has to be direct.



श्रीहरि:

# श्रीद्भागवतप्रस्थाने 'प्रस्थानरत्नाकरे' च प्रत्यक्षप्रमाणविमर्श:

डॉ. विन्ध्येश्वरीप्रसादमिश्र:

मेघश्यामतनुप्रभां स्थिरतडिद्दीप्तोज्ज्वलां मञ्जुलाम्
लीलालास्यलसच्छटां मधुपृषत्सद्वर्षहर्षां पराम्।
शुष्यत्प्रीतिधुनीविवर्धनकरीं चिद्वाटिकोज्जीवनीं
ध्यायामो हृदि सद्घनामृतमयीं राधामुकुन्दद्वयीम्॥१॥
प्रमाणप्रामाण्ये यदनुसरणात् सम्प्रसरत:
प्रमित्सावैविध्यं फलति यदुपाश्रित्य सफलम्।
प्रमेयाकारं यत् स्फुरति बहुधाऽप्यद्वयपदं
नुम: तच्चैतन्यं सदिति हृदि भान्तं रसघनम्॥२॥
शुकवाङ्माधुरीस्फूर्तं मूर्त्तं श्रुत्यन्तविग्रहम्।
वन्दामहे द्रुतं दीप्तं श्रीमद्भागवतामृतम्॥३॥
कृष्णद्वैपायनं श्रीमद्बादरायणसञ्ज्ञितम्।
विधातारं रसस्यास्य व्यासदेवम् उपास्महे॥४॥
ब्रह्मराताभिधं व्यासात्मजं योगीन्द्रवन्दितम्।
नन्दिताखिलसत्सार्थं नमामो बादरायणिम्॥५॥
येषां पादाब्जपांसूनां स्मरणादपि तत्क्षणम्।
मनो निश्चलतां याति गुरूंस्तांश्च भजामहे॥६॥

प्रत्यक्षमिति सर्वप्रमाणोपजीव्यत्वात् मुख्यं प्रमाणम् इति नग्नान् व्यतिरिच्य प्राय: समेषामपि आस्तिक-नास्तिकोभयनयनिपुणानाम् अभिमति:. चार्वाकोऽपि व्यतिरिक्तान् प्रमाणभेदान् अनंगीकृत्य प्रत्यक्षमेव कक्षीकुर्वन् दृश्यते. ''अक्षम् अक्षं प्रतीत्य यस्मिन् प्रमिति: उत्पद्यते तत् प्रत्यक्षम्'' इति अस्य निर्वचनं,

तत्तु प्राय: प्रायोवादतामेव अवलम्बते, सर्वैः वादिभिः अत्र नियततयेन्द्रियार्थसन्निकर्षनियमस्य प्रत्यक्षलक्षणावसरे अनभ्युपगमाद् इति[१] न अविदितं तत् तत्त्वविदाम्. 'द्रष्टम्' इत्यस्यैव नामान्तरं सांख्यकृतान्ते अपरोक्षम् इति, अद्वैतवेदान्तिनां नये 'आत्मसंविद्' इति च, अंशतः श्रीमद्भागवतप्रस्थानाभिमानवताम् अस्माकं सिद्धान्तइति न जातु भ्रमितव्यं सुधीभिः.

चार्वाकाद् अनन्तरं सर्वैरपि वादिभिः स्वस्वप्रक्रियाम् अनुसरद्भिः अस्य वैशद्येन लक्षणस्वरूपभेदप्रभेदाद्याविष्कृतिः प्रसाधितेति तत्तदाकरग्रन्थैरेव अवगन्तव्यं, विस्तरभयात् प्रकृते अनावश्यकत्वात् न क्रमशः तेषां समेषां लक्षणादीनाम् अनुवादो अत्र विधीयते; स्वराद्धान्तसमाराधनावसरेतु यथाप्रसंगं समालुलोचयिषया तानि अंशतः समादाय निरूपयिष्यामएव इति अलं बहुभूमिकया. अधुना प्रकृतम् अनुसरामः.

**श्रीमद्भागवतमहापुराणं वेदान्तस्य स्वतन्त्रं श्रुतिस्मृतितर्कसमन्वयपरं प्रस्थानम्**

अष्टादशपुराणेषु अन्यतमं श्रीमद्भागवतं भावदृष्ट्या कलिकल्मषरन्धनं ललितकृष्णकथानिबन्धनं भगवत्प्रीतिपरायणानाम् अन्यतमं परमञ्च धनं सद्भक्तिशास्त्रं, भगवतो वेदव्यासापरनामधेयस्य बादरायणाचार्यस्य स्वाविष्कृतवेदान्तसूत्राणां स्वोपज्ञं रसभाष्यं, दार्शनिकसिद्धान्तदृष्ट्या च उपनिषद्रूपश्रुतिप्रस्थानस्य श्रीमद्भगवद्गीतारूपस्मृतिप्रस्थानस्य ब्रह्मसूत्ररूपतर्कप्रस्थानस्य च मिथः समन्वयपरं वेदान्तदर्शनस्य स्वतन्त्रं प्रथमञ्च प्रस्थानम् इति अस्माभिः स्वीयानेकसन्दर्भेषु पुरापि अभ्यधायि. वेदान्तसूत्राणां, श्रीशंकरभगवत्पाद-श्रीभास्कराचार्य-श्रीरामानुजाचार्य-श्रीमदानन्दतीर्थ-श्रीनिम्बार्काचार्य - महाप्रभु-श्रीवल्लभाचार्य-श्रीबलदेवविद्याभूषणादयो ये-ये भाष्यकृतो अभूवन् ते भारतीयविचारपद्धत्या श्रीभद्भागवतात् कालक्रमतो अर्वाञ्चः. समेषामपि एषां सिद्धान्तानाम् अनादिपरम्परादृष्ट्या नित्यत्वाद् अथच सत्यत्वादपि एभिः प्रवर्तिताः समुद्धृता वा सम्प्रदायाः सन्दृब्धाश्च भाष्यादिग्रन्था न श्रीमद्भागवतस्य स्वाभिप्रायम् अन्यथयितुं प्रभवन्ति - प्रभविष्यन्तीति च सुदृढं मन्यामहे.

अत्र यद्यपि समाम्नातपूर्वाणां भक्ति-ज्ञान-वैराग्यादि-साधनसम्पत्या स्वस्वस्थाने अपूर्वाणाम् अमीषां केवलाद्वैत-विशिष्टाद्वैत-शुद्धाद्वैत-द्वैतद्वैताद्वैतादि-वेदान्तप्रतिष्ठापनाचार्याणाम् आर्याणां सिद्धान्तमूलानि तत्र-तत्र अधिकारिभेदाद् रुचिभेदात् श्रीमद्भागवतशास्त्रे प्रसंगत: संगमयितुं शक्यानि किन्तु एकस्यैव कस्यचन आचार्यस्य सिद्धान्त: समग्रस्य श्रीमद्भागवतस्य व्याख्याने पर्याप्नोति इति अभिनिवेशो न अस्माकं मनो अनुरञ्जयति. श्रीमद्भागवतशास्त्रे बहवो अंशा: दर्शनशास्त्रीया: तत्तत्प्रसंगेषु अधिकारभेदं रुचिभेदं च अनुरुन्धानाः भक्ति-ज्ञान-विराग-पोषणपूर्वकं नैष्कर्म्याविष्कारायैव प्रभवन्ति; वस्तुतस्तु अमलज्ञानात्मिका परमहंससंहितैव एषा महामुनिकृता वाक्प्रसृति:. यथा उक्तं तत्रैव ग्रन्थोपसंहारे ''श्रीमद्भागवतं पुराणम् अमलं यद् वैष्णवानां प्रियं, यस्मिन् पारमहंस्यम् एकम् अमलं ज्ञानं परं गीयते, तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यम् आविष्कृतं, तत् शृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येत् नर:'' (भाग.पुरा.१२।१३।१८) इत्यत्र. एतस्मादेव अस्य सर्ववेदान्तसारतापि सांगत्यम् उपैति. तदपि उक्तं भगवता पुराणकृता ''सर्ववेदान्तसारं यद् ब्रह्मात्मैकत्वलक्षणं वस्तु अद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम्'' (तत्रैव १२।१३।१२). अपिच ''सर्ववेदान्तसारं हि श्रीमद्भागवतम् इष्यते'' (तत्रैव १२।१३।१५) इत्युक्तरीत्या 'ब्रह्मात्मैकत्वलक्षणकं' 'कैवल्यैकप्रयोजनकं' च शास्त्रम् इदं भूयस्त्वेन ज्ञानप्रमाण-तत्त्वाचारमीमांसासु श्रीमच्छंकराचार्यराद्धान्तम् अनुगृह्णाति इति निष्पक्षतया स्फुटम् अवबुध्येरन् मार्मिका:. किन्तु लीलादिरसरहस्यानां प्रकाशनावसरे भगवद्भक्त्युपासनादि-निरूपणसन्दर्भे तत्तद्वैष्णवाचार्याणामपि मतानि उत्तभ्नाति इति निर्विचिकित्सं सम्प्रधारयाम:. अतो अस्मत्प्रतिपादितं श्रीमद्भागवतदर्शनं ब्रह्मविद्यया सार्द्धं भक्त्यादिसंवलितत्वात् न केवलं केवलाद्वैतमेव श्रीमद्भाष्यकार-शंकरभगवत्पाद-प्रतिपादितं मतं प्रथयति अपितु नैकेषु प्रसंगेषु तद्व्यतिरिच्यापि अग्रे सरति इति समालोचनावसरे अवधेयं धिषणाधौरेयै:. एतस्मादेव कारणाद् भागवतोक्त-प्रमाण-प्रमेयादि-सन्दर्भा न सर्वथा वेदान्तपरिभाषादिकानां केवलाद्वैतग्रन्थानां; नवा प्रस्थानरत्नाकरादीनां शुद्धाद्वैतसन्दर्भाणाम् अन्येषां वा साम्प्रदायिकप्रबन्धानामेव तात्पर्यम् अवकल्पन्ते. तेतु स्वतन्त्रानुरोधात् सुतरां स्वतन्त्राअपीति श्रीहरिगुरुकृपया यथामति श्रीमद्भागवतशास्त्रस्य भृशम् अनुशीलनान्तरं निर्भ्रान्तं वक्तुम् ईश्महे. अधुना

इदम्प्रथतया शास्त्रस्य अस्य प्रत्यक्षप्रमाणावलम्बिनीं पद्धतिं संक्षिप्य निदर्शयामः.

**श्रीमद्भागवते प्रत्यक्षप्रमाणस्य अभिस्वीकृतिः स्वरूपं भेदाः पद्धतिः च**

प्रमाणत्वेन अत्र प्रत्यक्षस्य सुस्पष्टम् अभिस्वीकृतिः मुक्तिलक्षणलक्षितं एकादशस्कन्धे वारत्रयम्. यथा "श्रुतिः प्रत्यक्षम् ऐतिह्यम् अनुमानं चतुष्टयं प्रमाणेषु अनवस्थानाद् विकल्पात् स विरज्यते" (११।१९।१७)इति प्रथमवारम्. "प्रत्यक्षेण अनुमानेन निगमेन आत्मसंविदा, आद्यन्तवद् असन् ज्ञात्वा निःसंगो विचरेद् इह" (तत्रैव ११।२८।९) इति द्वितीय वारम्. अथ तृतीयवारञ्च यथा "ज्ञानं विवेको निगमः तपः च प्रत्यक्षम् ऐतिह्यम् अथ अनुमानम्, आद्यन्तयोः अस्य यदेव केवलं कालः च हेतुः च तदेव मध्ये" (तत्रैव ११।२८।१८).

—इति त्रिष्वपि स्थलेषु सर्वटीकाकृत्सम्मतत्वात् प्रत्यक्षस्य प्रमाणता. यथाहि "एवं प्रमाणचतुष्टयम् ..." (११।१९।१७) इत्यस्य भावार्थदपिकायां "आद्यन्तवत्त्वे प्रमाणानि प्रत्यक्षादीनि...." (११।२८।९) इत्यस्य च भावार्थदीपिकायाम्. तत्रभगवन्तः श्रीधरस्वामिनः "श्रुतिरिति द्वाभ्यां...प्रमाणचतुष्टयम्" "...प्रत्यक्षं प्रमाणम्" (११।१९।१७) इत्यस्य 'सिद्धान्तप्रदीप'व्याख्याने श्रीशुकदेवः. "प्रत्यक्षादिप्रमाणबलेन...-"कि१ (११।२८।९) इत्यस्य 'पदरत्नावल्यां' च श्रीमद्विजयध्वजः.

अत्र द्वितीयाभिस्वीकृतौ, "आत्मसंविद्" इति प्रत्यक्षस्यैव आन्तरः पारमार्थिकः कश्चिद् भेदविशेषो न प्रमाणान्तरं, यथाहुः श्रीस्वामिवर्याः "आत्मसंविदा स्वानुभावेन..." (११।२८।९ इत्यत्र 'भावार्थदीपिका') "प्रत्यक्षं स्वानुभवः...." (११।२८।१८ इत्यत्र च 'भावार्थदीपिका') इति.

ननु च 'आत्मसंविदा' इति उपादानं 'प्रत्यक्षेण' इति पृथक्पदसहकृतमिति टीकाग्रन्थो न मूलम् आटीकते इति कैश्चिद् उट्टंक्येत तदपि नावदातं, 'प्रत्यक्षम्' इति प्रथमपदेन विषयेन्द्रियसम्पर्कजस्य व्यावहारिकबोधस्य द्वितीयेन 'आत्मसंविद्' इत्यनेन च 'आत्मसाक्षात्कारा'ख्य-पारमार्थिकबोधस्य उद्दिष्टत्वाद्.

केवलाद्वैतप्रस्थानवद् अत्र भागवतप्रस्थानेऽपि प्रकारान्तरेण इन्द्रियजन्यं तदजन्यम् इति प्रत्यक्षद्वैविध्यस्य वक्ष्यमाणरीत्या अभ्यंगीकाराद् इति अनाकुलम्. अथ अत्र किंस्विल्लक्षं प्रत्यक्षं? किञ्च तत्स्वरूपम् इति उच्यते भगवता श्रीमद्भागवतशास्त्रकृता व्यासेन स्वमुखेन ग्रन्थे अत्र न अस्य लक्षणं न्यरूप्यत: समग्रग्रन्थानुशीलनमहिम्ना वयमेव अस्य लक्षमेत्थं निष्कर्षयाम:

"**साक्षात्कारिप्रमावृत्त्युपजननं प्रत्यक्षम्**" इति.

साक्षात्कारित्वञ्च अत्र ज्ञानान्तरसाचिव्यराहित्यम्. तेन अनुमानादौ न अतिव्याप्तिः. 'प्रमावृत्त्युपजननम्' इत्यनेन भ्रमात्मकज्ञानोपजनके करणे प्रमारूपयथार्थबोधे प्रमाणस्य फले च अतिप्रसक्तिः पराकृता. वृत्त्युपजनकता हि अत्र स्वीकृते बहुविधप्रत्यक्षभेदे पृथक्पृथगेव अवगन्तव्या. तद् यथा व्यावहारिके ( लौकिके ) प्रत्यक्षे वाक्पाणिपादादि-पञ्चकर्मेन्द्रियैः उपस्थापिते चक्षुरादिपञ्चज्ञानेन्द्रियार्थसन्निकर्षे ज्ञानेन्द्रियाणां सामान्यानां, योगिनां योगजप्रत्यक्षे तप:संयमयोगादि-साधनोद्दीप्तबलवद्विशिष्टेन्द्रियाणां भगवदनुगृहीतानां भक्तानां श्रीमद्भगवद्विग्रह-लीलाधामादि-साक्षात्कारे तत्प्रसादावाप्त-दिव्येन्द्रियाणां, सुखदु:खमोहाद्यनुभवात्मके मानसप्रत्यक्षे च अन्त:करणप्रतिरूपस्य मनसो बुद्धेः वा इत्यस्य प्रक्रियातु अग्रे विवरिष्यते. ब्रह्मापरपर्यायस्य आत्मनस्तु साक्षात्कारे यद्यपि "न तत्र चक्षुः गच्छति न वाग् गच्छति नो मन:" ( केनोप.१।१।३ ) "यद् मनसा न मनुते" ( तत्रैव १।१।६ ) "यत् चक्षुषा न पश्यति" ( तत्रैव १।१।७ ) "यत् श्रोत्रेण न शृणोति" ( तत्रैव १।१।८ ) इत्यादिश्रुत्यन्तवचोभिः "यद् न स्पृशन्ति न विदुः मनोबुद्धीन्द्रियासव:" ( तत्रैव ६।१६।२३ ) "नैतन् मनो विशति वाग् उत चक्षुः आत्मा" ( तत्रैव ११।३।३६ ) प्रभृतिभिश्च पारमहंस्यसंहितोक्तवचनैः च मनोबुद्ध्यादीनां तज्जन्यवृत्तीनां वा परमार्थतया नास्ति उपयोग: तथापि "यस्तु विज्ञानवान् भवति समनस्कः सदाशुचिः, सतु तत्पदम् आप्नोति यस्माद् भूयो न जायते" ( कठोप.१।३।८ ) "विज्ञानसारथिः यस्तु मन:प्रग्रहवान् नरः, सो अध्वनः पारम् आप्नोति तद् विष्णोः परमं पदम्"( तत्रैव १।३।९ ) "एष सर्वेषु भूतेषु गूढो आत्मा न प्रकाशते, दृश्यतेतु अग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः"( तत्रैव १।३।१२ ) इत्यादि श्रवणात्. तथैव "निर्गुणे

ब्रह्मणि मयि धारयन् विशदं मनः, परमानन्दम् आप्नोति यत्र कामो अवसीयते''( भाग.पुरा.११।१५।१७ ) ''आत्मानं चिन्तयेद् एकम् अभेदेन मया मुनिः''( तत्रैव ११।१८।२१ ) ''तस्माद् ज्ञानेन सहितं ज्ञात्वा स्वात्मानम् उद्धव''( तत्रैव ११।१९।५ ) ''आत्मा केवल आत्मस्थो विकल्पापायलक्षणः एवम् अन्वीक्षमाणस्य कथं वैकल्पिको भ्रमो मनसो हृदि तिष्ठेत व्योम्नीव अर्कोदये तमः''( तत्रैव ११।२४।२७ - २८ ).

इत्येवमादिभिः वाक्यैः समुत्थिताद् भागवतशास्त्रानुशासनात् च, विविदिषादशायां मनोबुद्धिवृत्तीनामपि औपयिकत्वं न न समञ्जसम्. तस्माद् वक्ष्यमाणरीत्या अस्मत्स्वीकृतेषु समेष्वपि प्रत्यक्षभेदेषु अस्य लक्षणस्य संगतिः निरवद्या.

**अथ प्रत्यक्षभेदाः**

अस्मिन् शास्त्रे प्रत्यक्षं प्रथमतया द्विरूपम् : १. इन्द्रियार्थसन्निकर्षजं 'प्रत्यक्ष'पदवाच्यं प्रथमम्. २. मानसम् अथवा अन्तःकरणार्थसन्निकर्षजं 'वेदान्त'पदवाच्यासु उपनिषत्सु 'अपरोक्षम्' इति पदेन श्रीमद्भागवतेतु 'आत्मसंविद्' इति पदेन परामृश्यमाणं द्वितीयम्.

आद्यं पुनः पञ्चप्रकारकम् :

क. सामान्येन्द्रियप्रत्यक्षं लौकिकानां येन आधिभौतिकं स्थूलं वर्त्तमानकालिकञ्च जगत्स्वरूपम् अधिगम्यते. एतच्च शब्दस्पर्शरूपरसगन्धात्मक-विषयपञ्चकत्वात् श्रोत्रत्वक्चक्षूरस-नघ्राणेन्द्रियद्वारकं पञ्चविधम्. प्रक्रियादृष्ट्या सविकल्पकं निर्विकल्पकम् इति द्विविधं च.

ख. सामान्येन्द्रियद्वारेण घटपटादौ सन्मात्रसत्तावगाहिज्ञानिनां प्रत्यक्षम्. इदन्तु एकविधम्. ब्रह्मविद्वरिष्ठज्ञानिमात्रैकसंवेद्यम्. अनेन पञ्चेन्द्रिय-परिगृहीत-भौतिकप्रपञ्चेऽपि ''सर्वं खलु इदं ब्रह्म'' ( छान्दो.उप. ३।१४।१ ) इति श्रुत्युक्तदिशा ब्रह्मबुद्धिरेव उपादीयते.

ग. सामान्येन्द्रियद्वारेण भगवद्भक्तानां "वासुदेवः सर्वम्" इति 'भावनाप्रत्यक्षम्'. प्रत्यक्षभेदो अयं भावनाप्रवणेषु भगवद्भक्तेष्वेव स्वरूपम् आधत्ते. एतस्मादेव विभूतियोगदर्शनस्य संसिद्धिः इति पश्चात् स्फुटीकरिष्यते.

घ. योगराद्धदिव्येन्द्रियप्रत्यक्षम्. अनेन भूतभविष्यद्वर्त्तमान-त्वावच्छिन्नम् आधिभौतिकम् आधिदैविकम् आध्यात्मिकं च जगद् अधिगन्तुं क्षमन्ते युक्तयुञ्जानभेदभिन्नाः योगिनः. एतच्च स्थूलशरीरस्थ-गोलकनिरपेक्षं सूक्ष्मेन्द्रियमात्रनिर्वर्त्यम् आन्तरम्. इदमपि च भेदद्वयीम् अवगाहते. यथा, धारणाध्यानादिचिन्तासह-कृतं परिच्छिन्नकालमात्रावसायि प्रथमम्. समाधिजन्यम् अप्रयासनिर्वर्त्यं शश्वत्कालिकं च द्वितीयम्.

ङ. भगवदनुग्रहलब्ध-भगवज्जनानुग्रहलब्ध-दिव्येन्द्रिय-प्रत्यक्षम्. अनेन आधिदैविकस्य जगतः तत्रापि प्रकृतिकृत-कञ्चुकाद्यतीतानां सच्चिदानन्दात्मकानां श्रीमद्भगवतः तत्पार्ष-दानां च श्रीविग्रहलीलाधामादिकान्तं साक्षात्कृतिः उपपद्यते. अस्य अधिकारिणः सगुणसाकार-भगवन्मूर्त्युपासका भक्ताएव.

द्वितीयम् इन्द्रियनिरपेक्षमपि द्विविधम् : १. सर्वसाधारणस्य मानसप्रत्यक्षं प्रथमम्. २. जीवन्मुक्तानां विदेहमुक्तानां नित्यात्मप्रत्यवमर्शस्वरूपञ्च द्वितीयम्.

अथ एतेषां सनिदर्शनं प्रक्रियानिरूपणम्.

पर्यायेण अत्र समेषामपि एषां प्रत्यक्षभेदानाम् उदाहरणपूर्विका पद्धतिः अत्र प्रसाध्यते.

### क. सामान्येन्द्रियप्रत्यक्षं

तेषु इन्द्रियार्थसन्निकर्षजन्ये प्रथमे सामान्येन्द्रियप्रत्यक्षम् अस्मदादिलौकि-कजनानाम्. श्रीमद्भागवतशास्त्रानुसारम् अस्मदादीनां पुरुषाणाम् इन्द्रियाणि ब्रह्माण्डाधिष्ठातृचेतनपुरुषस्य भगवतो 'विराड्' इति उपलक्षितस्य आद्यावतारस्य विग्रहे प्रपञ्चनिर्माणोपक्रमे समष्टिरूपतया अधिष्ठितानाम् इन्द्रियाणां

प्रतिरूपकाण्येव. तथ्यम् इदं श्रीमद्भागवते द्वितीयस्कन्धस्य पञ्चमे अध्याये, द्वाविंशारभ्य एकत्रिंशत्तमं श्लोकं यावत्, तत्रैव षष्ठे अध्याये प्रथमाद् आरभ्य पञ्चदशपद्यपर्यन्तं, तृतीयस्कन्धस्य षष्ठे अध्याये दशमाद् आरभ्य षड्विंशपद्यपर्यन्तम्. एवमेव अत्रैव षड्विंशे अध्याये त्रयोविंशतितमाद् उपक्रम्य त्रिंशत्तमं श्लोकं यावद्. अपिच एकादशस्कन्धस्य द्वाविंशे अध्याये पञ्चदशाद् आरभ्य विंशतितमं पद्यं यावद्. एवं विस्तरेण अधिगन्तुं सुशकम्.

अथ प्रस्थाने अस्मिन् कति इन्द्रियाणि अभ्युपगम्यन्ते? किम् एतेषां स्वरूपाणि कार्याणि इति च संक्षिप्य विमृशामः. अथ अत्र क्वचन "तैजसात्तु विकुर्वाणाद् इन्द्रियाणि दश अभवन्... श्रोत्रं त्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः" (२।५।३१) "इन्द्रियाणि दश श्रोत्रं त्वक्दृग्रसननासिकाः वाक्करौ चरणौ मेढ्रं पायुः दशम उच्यते" (३।२६।१३). इत्युक्तपद्धत्या पञ्चज्ञानेन्द्रियाणां श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानां पञ्चकर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थानाम् इत्याहत्य दशेन्द्रियाणाम् अभ्यंगीकारः. अत्र एकस्मिन् स्थले मनसस्तु उभयेन्द्रियत्वम् उक्तम् अतः क्वचित् तेन सार्द्धम् इन्द्रियाणि एकादशसंख्याकानि इत्यपि प्रत्यपीदद् ग्रन्थकारो यथा "एकादशेन्द्रियचमूः पञ्चसूनाविनोदकृत्" (४।२९।२०) "एकादश आसन् मनसो हि वृत्तयः" (५।११।९) इति. तत्तु औपचारिकमेव आभाति. यतो अत्र श्रीविजयध्वजं विहाय प्रायः सर्वेऽपि टीकाकृतो दशेन्द्रियैः साकं मनसः स्थाने अहंकारम् अंगीकुर्वन्ति. यथा 'भावार्थदीपिकाकारः' श्रीधरस्वामिनः "एकादश वृत्तयः आसन्. आकूतयः क्रियाकाराः पञ्च, धियः च ज्ञानाकाराः पञ्च, अभिमानः च इति" (५।११।९).

एवमेव 'श्रीभागवतचन्द्रिकायां' श्रीवीरराघवः, 'सिद्धान्तप्रदीपे' श्रीशुकदेवः, 'सारार्थदर्शिन्यां' श्रीविश्वनाथचक्रवर्ती, 'बालप्रबोधिन्यां' गोस्वामिश्रीगिरिधरलालो, 'भक्तमनोरञ्जयिन्यां' श्रीभगवत्प्रसादाचार्यः चापि इति समे सम्मेनिरे. 'पदरत्नावली'कृद् विजयध्वजस्तु "अयम् अर्थः ; श्रोत्रादीनि दश, एकं मनः इति एकादशेन्द्रियाणि" इति उपचारदृशैव व्याचष्टे. अथ कुत्रचिद् ज्ञाज्ज्ञानेन्द्रियपञ्चकेन समं मनसः सांगत्यम् आदाय इन्द्रियषट्कं, कुहचिच्च

तद्व्यतिरिच्य इन्द्रियपञ्चकमेव व्याजहार तत्रभगवान् भागवतकृद् यथा "षाड्वर्गिकं जिघ्रति षड्गुणेशः" (१।३।३६) "प्रत्याहृतषडिन्द्रियः" (१।१३।५३) "षडिन्द्रियवर्गेण" (५।१४।१) "षडिन्द्रियनामानः" (५।१४।१). एवञ्च "पञ्चेन्द्रियार्थप्रक्षेपः" (४।२९।११) "भूतेन्द्रियाणि पञ्चैव" (११।१२।२३) "मनः कर्म्ममयं नृणाम् इन्द्रियैः पञ्चभिः युतम्" (११।२२।३६). इत्यादौ.

तद् एतेषु सन्दर्भेषु प्रकरणसंगतिरपि उन्नेया. तत्त्वार्थजिघृक्षुभिः भागवतार्थविद्भिः यथा सर्वत्रापि अत्र ज्ञानेन्द्रियाणामेव तत्तद्विषयेषु प्रवृत्तिः प्रत्याहारप्रसंगे च तेभ्यएव निवृत्तिः विवक्षिता तद् उक्तं महाप्रभुणा श्रीमद्वल्लभाचार्येणापि "प्रत्याहृतषडिन्द्रिय" (१।१३।५३) इत्यस्य वचनस्य व्याख्याने श्रीसुबोधिन्यां "षडिन्द्रिय इति (कस्मादाहेत्युच्यते) कर्मेन्द्रियाणि नियमएव प्रत्याहृतानि". यत्र ज्ञानेन्द्रियाणामेव कर्तृत्वं विवक्षितं मनसश्च पृथगुपादानं कृतं तत्र पञ्चेन्द्रियाणि उक्तानि इत्यस्य प्रकरणार्थो वेदितव्यः.

वस्तुतः "इन्द्र आत्मा ईयते अनेन इति इन्द्रियम्" इति व्युत्पत्या इन्द्रियदशकमेव अभ्युपगन्तुम् उचितम् अत्र, ज्ञानेन्द्रियैः साकं कर्मेन्द्रियाणामपि क्रियाशक्तिद्वारेण आत्माभिव्यञ्जनपरत्वात् मनसश्च उभयेन्द्रियानुग्राहकत्वेऽपि उपरिष्टात् निरूप्यमाणसरण्या अस्य तेभ्यः स्वरूपतो भिन्नत्वादिति न काचिद् इह विप्रपत्तिः.

अथ इन्द्रियाणां मनसः च अस्मिन् शास्त्रे समुत्पत्ति-स्वरूप-कार्यादीनां विवेचनम्. यथा "वैकारिकाद् मनो जज्ञे देवा वैकारिका दश, दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रकाः, तैजसात्तु विकुर्वाणाद् इन्द्रियाणि दश अभवन्" (२।५।३०-३१). "अहंतत्त्वाद् विकुर्वाणाद् मनो वैकारिकाद् अभूत्, वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः, तैजसानि इन्द्रियाण्येव ज्ञानकर्ममयानि च (३।५।३०-३१). "वैकारिकाद् विकुर्वाणाद् मनः तत्त्वम् अजायत यत् संकल्पविकल्पाभ्यां वर्तते कामसम्भवः (३।२६।२७). "तैजसानि इन्द्रियाण्येव क्रियाज्ञानविभागशः (३।२६।३१). इत्येभिः ग्रन्थसन्दर्भैः प्रथमं परमात्मनः त्रिगुणात्मिका प्रकृतिः सञ्जायते. सदसदात्मिकायाम् अस्यां मायेत्यपरपर्यायायां प्रकृतौ कालवृत्या भगवदीक्षणात् सञ्जाते क्षोभे महत् तत्त्वं, तस्मात् च तयैव रीत्या अहं

तत्त्वम् अजायत. अयम् अहंकारः पुनः क्षोभम् अवाप्य कार्यकारणकर्त्रात्मा सन् भूतेन्द्रियमनोरूपत्वं त्रिधात्वम् आधत्ते. अर्थात् कार्यरूपाणि पञ्चभूतानि कारणरूपाणीन्द्रियाणि कर्तृरूपं मनः इन्द्रियाधिष्ठातृदेवान् च क्रमशः स्वसात्त्विकराजसतामसभेदैः सञ्जनयति. सात्त्विकस्यैव अत्र 'वैकारिकाहंकार' इति सञ्ज्ञा राजसस्य च तैजस इति पारिभाषिकत्वम् अवधेयम्. एतेन कारणभेदेन मनसः इन्द्रियाणां च पृथग्व्यवस्थानं सुतराम् उपपद्यते.

श्रीमद्भागवतेऽपि "प्राणेन्द्रियमनोबुद्धिः..." (६।३।२८) "चित्तस्य चित्तेः मन इन्द्रियाणां पतिः महान् भूतभूतगुणाशयेशः" (६।३।२९) "येन इन्द्रियप्राणमनोगुणान्" (६।१।३३) "निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यत्" (१०।८७।३३) "कायेन वाचा मनसा इन्द्रियैः वा" (११।२।३६) "देहेन्द्रियप्राणमनोधियां यो" (११।२।४९) "इन्द्रियाणि मनोबुद्धिः सह वैकारिकैः नृप" (११।३।१५) "नैतद् मनो विशति वाग् उत चक्षुः आत्मा, प्राणेन्द्रियाणि च यथा अनलम् अर्चिषः स्वाः"(११।३।३६) "बुद्धीन्द्रियप्राणमनोवचोभिः" (११।६।७) "मनसा वचसा दृष्ट्या गृह्यते अन्यैरपि इन्द्रियैः"(११।१३।२४) "इन्द्रियाणि इन्द्रियार्थेभ्यो मनसा आकृष्य" (११।१४।४२) "वाचं यच्छ मनो यच्छ प्राणान् यच्छ इन्द्रियाणि च"(११।१६।४२) "प्राणेन्द्रियमनोमयम्" (११।२१।३६) "भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश" (११।२२।२३) "मनः कर्ममयं नृणाम् इन्द्रियैः पञ्चभिः युतम्" (११।२२।३६) "देहेन्द्रियप्राणमनोऽभिमानो" (११।२८।१६) "नात्मावपुः पार्थिवम् इन्द्रियाणि मनो अन्नमात्रं धिषणा च सत्त्वम् अहंकृतिः खं क्षितिः अर्थसाम्यम्" (११।२८।२८). इत्येतेषु सन्दर्भेषु मनसः इन्द्रियेभ्यः पृथगुपादानात् तस्य तत्त्वतो अनिन्द्रियत्वं तेभ्यश्च वैशिष्ट्यमेव व्यवतिष्ठते.

अपिच आत्यन्तिकलयप्रसंगे "अम्बरं शब्दतन्मात्रे इन्द्रियाणि स्वयोनिषु, योनिः वैकारिके, सौम्य!, लीयते मनसि ईश्वरे" (११।२४।२४-२५) इति निरूपणाद् इन्द्रियाणां स्वप्रवर्तकदेवतासु अथवा स्वकारणे राजसाहंकारे लयो अभिमतः तेषां तस्य च तन्नियन्तरि मनसि तदनु देवताभिः सह मनसो वैकारिकाहंकारे इति अनेनापि मनो न इन्द्रियम् अपितु तेषां नियन्ता - नायकः इत्येव अत्र अभिप्रेतम् उपलक्ष्यते. वस्तुतो मनो अत्र अन्तःकरणस्य कार्यभेदात्

पृथग् अनुभूयमाना वृत्तिरेव. यथोक्तं तृतीये कापिलेयोपाख्याने "मनो बुद्धिः अहंकारः चित्तम् इति अन्तरात्मकं चतुर्धा लक्ष्यते भेदो वृत्या लक्षणरूपया" (३।२६।१४).

अत्र विविधाश्च टीकाकृतः तद् यथा —

"अन्तरात्मकम् अन्तःकरणं वृत्या स्वगुणवृत्या संकल्पाध्यवसायाभिमानचिन्तारूपया" इति भागवतचन्द्रिकायां श्रीवीरराघवः.

"अन्तरात्मकम् अन्तःकरणम् एकमेव, मननहेतुत्वाद् मनो, बोधनहेतुत्वाद् बुद्धिः, देहादौ अहंकरणहेतुत्वाद् अहंकारः, चिन्तनहेतुत्वात् चित्तम् इति चतुर्धा भेदो लक्षणरूपया मननबोधनादिवृत्या लक्ष्यते" इति सिद्धान्तप्रदीपे श्रीशुकदेवः.

"एकमेव अन्तरात्मकम् अन्तःकरणं मनोबुद्ध्यादिभेदेन चतुर्धा लक्ष्यते" इति सुबोधिन्यां श्रीवल्लभाचार्यः.

अयम् आशयः : प्रस्थाने अस्मिन् अन्तःकरणस्य क्रियाभेदत्वादेव मनोबुद्ध्यादीनां व्यावहारिकं पार्थक्यं न पारमार्थिकम्. तस्माद् अन्तःकरणस्य विक्रियायाः नाम मनः, प्रक्रियायाः नाम बुद्धिः, संस्क्रियायाः नाम चित्तम्, अहंक्रियायाः च नाम अहंकारः इति युक्तम् उत्पश्यामः. तथापि आधिदैविकपद्धत्या अत्र मनसो बुद्धेः च व्यावहारिको भेदः स्वरूपभेदः चपि अभ्युपगम्यते. तत्तद्रहस्यञ्च इत्थम् अवकल्पयामः : "वैकारिकाद् विकुर्वाणाद् मनः तत्त्वम् अजायत यत् संकल्पविकल्पाभ्यां वर्तते कामसम्भवः, यद् विदुः हि 'अनिरुद्धा'ख्यं हृषीकाणाम् अधीश्वरं शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः, तैजसात्तु विकुर्वाणाद् बुद्धितत्त्वम् अभूत्, सति, द्रव्यस्फुरणविज्ञानम् इन्द्रियाणाम् अनुग्रहः, संशयो अथ विपर्यासो निश्चयः स्मृतिरेव च, स्वापः इति उच्यते बुद्धेः लक्षणं वृत्तितः पृथक्" (३।२६।२७।३०)इति यद् उक्तं तदेतस्य अयम् अभिप्रायः : श्रीमद्भागवतानुसारेण प्रत्येकमपि सृष्टि-स्रष्टव्य-पदार्थजातं तदनुरोधेन च उपास्यरूपं भगवत्तत्त्वमपि आधिदैविकम् आध्यात्मिकम् आधिभौतिकम् इति त्रिधात्वम् उपाश्नुते. तत् परमार्थदृशा अभिन्नमपि व्यवहारतो भिन्नत्वम् अवगाहते.

यथा उक्तं द्वितीयस्कन्धे "यो आध्यात्मिको अयं पुरुषः सोऽसावेव आधिदैविको यः तत्र उभयविच्छेदः पुरुषो हि आधिभौतिकः, एकम् एकतराभावे यदा न उपलभामहे, त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः" (२।१०।८,९), "वीर्यं हिरण्मयं देवो मायया व्यसृजत् त्रिधा, अधिदैवम् अथ अध्यात्मम् अधिभूतम् इति त्रिधा" (२।१०।१३,१४) अत्र आहुः भावार्थदीपिकाकृतः "आश्रयस्वरूपम् अपरोक्षानुभवेन स्पष्टं दर्शयितुम् अध्यात्मादिविभागम् आह-योऽयम् आध्यात्मिकः पुरुषः चक्षुरादिकरणाभिमानी द्रष्टा जीवः सएव आधिदैविकः चक्षुराद्यधिष्ठाता सूर्यादिः. तत्र एकस्मिन्नेव उभयोः द्विरूपो विच्छेदो यस्मात् स आधिभौतिकः चक्षुर्गोलकाद्युपलक्षितो दृश्यो देहः. पुरुषः इति पुरुषस्य जीवस्य उपाधिः 'स वा एष पुरुषो अन्नरसमयः' इत्यादिश्रुतेः. 'एकम् एकतराभावे' इत्येतेषाम् अन्योन्यसापेक्षसिद्धित्वेन अनात्मत्वं दर्शयति. तथाहि दृश्यं विना तत्प्रतीत्यनुमेयं करणं न सिद्ध्यति नापि द्रष्टा नच तद्विना करणप्रवृत्यनुमेयः तदधिष्ठाता सूर्यादिः. नच तं विना करणं प्रवर्तते, नच तद्विना दृश्यम् इत्येवम् एकतरस्य अभावे एकं न उपलभामहे तत्र तदा तत्त्रितयम् आलोचनात्मकेन प्रत्ययेन यो वेद साक्षितया पश्यति स परमात्मा आश्रयः" इति.

तस्माद् अत्र एवं व्यवस्था : अन्तःकरणं चतुर्धा, मनोबुद्ध्यहंकारचित्त-भेदेन.

तत्र विपरीतक्रमेण प्रथमं चित्तव्यूहम् : अत्र यद् अधिभूतं तत् 'महद्' इति व्यपदेश्यम्. यद् अध्यात्मं तत् 'चित्त'सञ्ज्ञितम्. यद् अधिदैवं तत् 'क्षेत्रज्ञः पुरुषः'. अयमेव आधिदैविकः पुरुषः उपास्यत्वेन 'वासुदेवः' इति अभिमतः.

द्वितीयम् अहंकारव्यूहम् : अत्र अधिभूतं वैकारिकादिभेदोपलक्षितं समष्ट्यहंतत्त्वम्. अध्यात्मं प्रतिपुरुषभिन्नो अहंकारो 'अभिमान'सञ्ज्ञितः. अधिदैवं श्रीरुद्रः. सएव उपास्यत्वेन संकर्षणापरनामा सहस्रफणोपलक्षितो भगवान् अनन्तः.

तृतीयं बुद्धिव्यूहम् : अत्र अधिभूतं समष्टिबुद्धिः "बुद्धिः अव्यक्तमेव

च'' ( भग.गीता. १३।५ ) इति स्मरणात्. अध्यात्मं प्रतिपिण्डम् अर्थेन्द्रियसम्बन्धस्फुरणात्मिका अध्यवसायादिरूपा. अधिदैवम् अत्र परमेष्ठी प्रजापतिः ब्रह्मा, उपास्यदेवः च 'प्रद्युम्ना'ख्यो भगवान् चतुर्व्यूहान्तर्गतः तृतीयः.

एवमेव चतुर्थं मनोव्यूहमपि : अत्र अधिदेवं ब्रह्माण्डव्यापिसोमतत्त्वं तन्मूलतत्त्वं चन्द्रमण्डलं च ''चन्द्रमा मनसो जातः'' (पुरु.सूक्त.१२) इति श्रुतेः. ( एतदेव क्षीराकूपारोद्भवम् उडुपतित्वेन उपलक्षितम् इति पुराणेषु प्रथते वादः ). अध्यात्मं प्रतिपिण्डव्यवस्थितम् उभयेन्द्रियाणां नायकम् अन्तःकरणवृत्तिरूपं मनः, ''चञ्चलं हि मनः कृष्ण'' (भग.गीता. ६।३४) इत्यादिप्रतिपादितत्वात्. अधिदैवं चन्द्रमण्डलाधिष्ठातृदेवत्वेन ब्रह्मणा व्यवस्थापितो अत्रिनन्दनः सोमापरपर्यायः 'चन्द्रा'ख्यो देवः ''सोमो अस्माकं ब्राह्मणानां राजा'' इति श्रुतेः.

इत्थं तत्त्वतो अभेदेऽपि प्रत्यक्षादिव्यवहारे श्रीमद्भागवते स्वरूपकार्यादिभिन्नत्वाद् बुद्धिमनसी पृथक्-पृथङ् निरूपिते.

अयम् आशयो : मनो वाक्पाण्याद्युपलक्षितानां पञ्चकर्मेन्द्रियाणां श्रोत्रादीनां पञ्चज्ञानेन्द्रियाणां प्रेरयिता ईश्वरः च, तद्विना तेषां स्वस्वकार्येजातेषु प्रवृत्यनर्हत्वात्, कथञ्चित् प्रवृत्तेऽपि स्वकार्ये अक्षमत्वादिति अस्य स्वरूपम्. अथच ''यत् संकल्प-विकल्पाभ्यां वर्तते कामसम्भवः'' (भाग.पुरा.३।२६।२७।) इति मूलोक्तरीत्या संकल्पविकल्पाभ्यां कामस्य इन्द्रियार्थजन्य-भोगाभिलाषस्य सञ्जननम् अस्य कार्यम्. एवमेव ''द्रव्यस्फुरणविज्ञानम् इन्द्रियाणाम् अनुग्रहः, संशयो अथ विपर्यासो निश्चयः स्मृतिरेव च स्वाप इति उच्यते बुद्धेः लक्षणं वृत्तितः पृथक्'' (तत्रैव ३।२६।२९ - ३० ) इति प्रागुदाहृतग्रन्थप्रामाण्याद् बुद्धिः द्रव्यादीनां, श्रोतव्यावलोकयितव्येत्याद्यर्थानां स्फुरणकरं प्रकाशकं ज्ञानस्वरूपजननं किमपि सामर्थ्यम् इन्द्रियाणां च अनुग्राहकं च. बुद्ध्या विना तानि-तानि इन्द्रियाणि तेभ्यः-तेभ्यः विषयभ्यः पृथक्-पृथग् भोगाहरणं कर्तुम् अनर्हाणि इति एतस्य तात्पर्यम्.

इत्थं चित्तस्य भोगादौ प्रवृत्तिनिवृत्त्यात्मकं स्फुरणं, बुद्धेः द्रव्यस्फुरणरूपं

विज्ञानं, मनसो रागद्वेषादीच्छामयत्वम् अहंकारस्य च एतेषां त्रयाणामपि कार्याणाम् अभिमानम् इति चतुर्विधस्य अन्तःकरणस्य व्यतिरिक्तानि कार्याणि इति अवधेयम्. तथाहि "शब्दं शृणोमि" इत्यत्र प्रथमं चित्तेन चेतनामात्रं निधीयते. बुद्ध्या "शब्दो अयम्" इति स्फूर्तिः. मनसा "मधुरो अयं शब्दो/अरन्तुदो अयम्" इति जिघृक्षा-परिजिहीर्षा वा. अहंकारेण च तत्र स्वाभिमानार्पणम् इति निदर्शनसंगतिः.

बुद्धेः द्रव्यस्फुरणस्यैव प्रपञ्चः संशयादिकाज्ञानविशेषाः, सदोषनिर्दोषेन्द्रिय-वृत्तिद्वारेण जायन्ते. तत्र संशयः "स्थाणुः वा पुरुषः वा" इति उभयकोट्यवगाही अनिश्चयज्ञानम्. विपर्यासो अतस्मिन् तद्बुद्धिरूपो मिथ्याज्ञानम्. निश्चयो अध्यवसायः प्रमाणज्ञानं वा. अनुभूतविषयासम्प्रमोषः स्मृतिः. पूर्वानुभूतस्य विषयस्य संस्कारद्वारेण पुनः बुद्धौ उपारोहः. स्वापो निद्रा च न तिरोहितं तद्विदाम्.

यत्तु "बुद्धेः जागरणं स्वप्नः सुषुप्तिः इति च उच्यते" (१२।४।२५) इति द्वादशस्कन्धोक्तलक्षणं न अत्र संगच्छते इति मा एवं भाषिष्ठाः तत्रैव "मायामात्रम् इदं राजन् नानात्वं प्रत्यगात्मनि" (१२।४।२५) इत्युक्तपद्धत्या प्रकरणस्य अस्य पारमार्थिकत्वात् कैश्चिद् मते अत्र 'बुद्धि'शब्दस्य जीवात्मधर्मभूतज्ञानपर-त्वात् च इति अनुक्तोपालम्भनम्.

अपरत्रापि अत्र शास्त्रे "मनः सर्वविकारात्मा बुद्धिः विज्ञानरूपिणी" (२।१०।३२) इति मनसो बुद्धेः च लक्ष्मणी यत् निगदिते तत् तयोरपि तात्पर्यं पूर्वोक्तनिरूपाणात् न मनागपि विसंवदते. यतः सर्वान् कामसंकल्पादीन् मनएव सञ्जीवयति बुद्धिरपि तथाभूतार्थविज्ञानरूपिणी, नतु स्वयं परमार्थग्राहिणी, मनःप्रेरितेन्द्रियानुग्रा-हकमात्रत्वात्. अत्र सुबोधिनीकृतो व्याख्यानं किञ्चिद् भिन्नं दृश्यते. यथाहि "सर्वे हि विकाराः त्रिविधाः, तन्मयत्वात् मनोऽपि त्रिविधं, बुद्धिरपि त्रिविधा इति आहः 'बुद्धिः विज्ञानरूपिणी' इति. विविधं ज्ञानं विज्ञानम्. तत् त्रिविधमिति तद्रूपिणी बुद्धिरपि त्रिविधा"[२]. अनेन बुद्धि-मनसोः प्रकृतिकृतगुणसम्पर्केण त्रैविध्यम् उदीरितम्

आचार्येण तदपि "बुद्धेः भेदं धृतेः चैव गुणतः त्रिविधं शृणु" इति उपक्रम्य "धृतिः सा पार्थ तामसी"(१८।१९-३५) इत्यन्तं प्रकरणम् अनुसरतीति न प्रमाणपराहतम्.

अथ दशानामपि इन्द्रियाणां लक्षण-स्वरूप-कार्यादीनि. तत्र प्रस्थाने अस्मिन् प्रथमम् इन्द्रियसामान्यलक्षणं तत्रैव द्वितीयस्कन्धे "गुणात्मकानि इन्द्रियाणि" (२।१०।३२) इति. अस्य अयम् अर्थो : गुणेषु शब्दादिषु आत्मा प्रवृत्तिः स्वभावो येषाम् अथवा औत्पत्तिकः सम्बन्धो येषां तानि गुणाभिमुखस्वभावानि इति आशयः. शब्दाद्यर्थेषु प्रवृत्तिः यद्यपि मुख्यतया ज्ञानेन्द्रियाणामेव किन्तु कर्मेन्द्रियाण्यपि व्याहरणाहरण-गमनादिक्रियाद्वारेण तदर्थोपस्थापनौपयिकत्वम् आभजन्तइति लक्षणस्य न अव्याप्तिः.

अथ उत्पत्ति-कारणाभिप्रायेण अपरत्र किञ्चिद् अपरं लक्षणं, तत्रैव च क्रियोपजनन-ज्ञानोपजनन-कार्यद्वयविभागाद्, द्वैविध्यमपि अंगीचकार भागवतकृदर्षिः. "तैजसानि इन्द्रियाण्येव क्रियाज्ञानविभागशः" (३।२६।३१) कापिलेयोपाख्याने. तदुभयलक्षणोत्थं समुदितं लक्षणं, **"तैजसाहंकारजन्यत्वे सति एकपिण्डस्थितत्वात् तदभिमानि-भोगसिद्ध्यौपयिक-तत्तत्क्रिया-ज्ञानान्यतरोपजनन-सामर्थ्यम् इन्द्रियम्"** इत्येव निर्गलति.

अथ एतेषां विशेषलक्षणानि : श्रीमद्भागवतशास्त्रे द्वितीयस्कन्धस्य षष्ठे अध्याये (प्रथमाद् आरभ्य अष्टमश्लोकपर्यन्तं), तृतीयस्कन्धस्य च षड्विंशे अध्याये (सप्तचत्वारिंशत्तमाद् आरभ्य अष्टचत्वारिंशत् पद्यम् अभिव्याप्य) उभयविधानाम् इन्द्रियाणाम् अधिष्ठातृदेवैः सममर्थजातानि कार्याणि च समनुक्रान्तानि. एवमेव एकादशे श्रीमद्भगवदुद्धवसंवादेऽपि "श्रोत्रं त्वग् दर्शनं घ्राणो जिह्वा इति ज्ञानशक्तयो वाक्पाण्युपस्थपाय्वङ्घ्रिकर्माणि अंग उभयं मनः, शब्दः स्पर्शो रसो गन्धो रूपं च इति अर्थजातयो गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः" (११।२२।१५-१६।) इतिश्लोकद्वयेन ज्ञानक्रियाभेदभिन्नानाम् एषां विषयाः कार्यभेदाः च सन्निरूपिताः. तदनुसृत्य क्रमशः समेषामपि विशेषलक्षणानि स्वरूपाणि वा च इत्थं निष्कर्षयामः.

**( अ ) कर्मेन्द्रियाणि ( पञ्च )**

१.वह्निदेवताधिष्ठितं स्थूलशब्दोद्भावनसमर्थम् इन्द्रियं वाक्. व्यष्टिशरीरस्थमुखोपलक्षितजिह्वा अस्याः गोलकम्. केवलं वैखर्या एव वाचः समुद्भावनम् अस्याः कर्म. मध्यमा-पश्यन्त्योः मनोरूपत्वात् परायाश्च आत्माभिन्नत्वात्.

२.इन्द्रदेवताधिष्ठितम् आदान-विसर्जनादि-बहुविधशिल्पोपजननम् इन्द्रियं पाणिः. तत् मनुष्येषु सामान्येषु द्वित्वावच्छिन्नं देवादीनां तपोयोगवरप्रभावादि-परिबृंहितसत्त्वानां मानवानाञ्च बहुबाहूपलक्षितमपि.

३.उपेन्द्र( विष्णु )देवताधिष्ठितंगमनसन्तरणस्फालनाघातादि-गत्युपजननम् इन्द्रियम् अंघ्रिः. तदपि सामान्यमानवानां शरीरे द्वित्वमयम्.

४.प्रजापत्यधिष्ठितं कामसुखोत्पादनं सन्तत्युपजनननिमित्तञ्च मेढ्रम्. तच्च स्त्री-पुम्भेदेन द्विप्रकारकं प्रसिद्धमेव.

५.मित्रदेवताकं मृत्युदेवताकं वा मलनिस्सारकम् इन्द्रियं पायुः. अस्य मलादिनिस्सारकं छिद्रं गुदं, मूत्रापसारकञ्च मेंढ्रस्थानएव व्यवस्थितम् इति वैलक्षण्यम्.

एतेषां प्रत्यक्षप्रमाणे न साक्षादुपयोगो, ज्ञानाजनकत्वादिति वयमपि अभ्युपगच्छामः प्रसंगवशादेव अत्र विवेचनं विहितम् एषाम् इति अवधेयम्.

**( आ )ज्ञानेन्द्रियाणि( पञ्चैव )**

१.''नभोगुणविशेषो अर्थो यस्य तत् श्रोत्रम् उच्यते'' ( ३।२६।४४ ) इत्यनेन, ''व्यभिद्येतां कर्णौ श्रोत्रं ततो दिशः'' ( ३।२६।५५ ) इत्यनेन च श्रीमद्भागवतवचनप्रामाण्येन ''**दिग्देवता-धिष्ठितं नभोगुणविशेषेण शब्दग्राहकम् इन्द्रियं श्रोत्रम्**''. एतस्य ''पितृहूः दक्षिणः कर्ण उत्तरो देवहूः स्मृतः'' ( ४।२९।१२ ) इति पुरञ्जनोपाख्यानतात्पर्याध्यायोक्तदिशा सामान्यतो गोलकद्वयं

मानवानाम्. शक्ति तारतम्येन स्फुटानाम् अस्फुटानां मन्द्रमध्यतारादिस्वरवतां च स्थूलशब्दानाम् अनेन ग्रहणम्. सूक्ष्मदिव्यशब्दानां ग्रहणन्तु प्रमेयबलेन गोलकनिरपेक्षमपि उपपद्यते.

२.''वायोः गुणविशेषो अर्थो यस्य तत् स्पर्शनं विदुः'' (३।२६।८६ ) इति वचनेन ''स्पर्शो अभवत् ततो वायुः त्वक् स्पर्शस्य च संग्रहः'' (३।२६।३५।) इति वचनेन च **''वायुदेवताकं वायुगुणविशेषत्वेन स्पर्शग्राहकम् इन्द्रियं त्वक्''**. एतस्य सर्वस्मिन्नपि स्थूलशरीरे बाह्याभ्यन्तरे परिव्याप्तिः. त्वग् इति उपलक्षणं स्पर्शग्राहकशरीरकोशानां स्नायुतन्त्रोत्थसूक्ष्मसंवेदनानां वा. तेन न तत् चर्ममात्रपर्यवसायि, दन्तकेशादौ उदराभ्यन्तरावयवेष्वपि च स्पर्शस्य संवेदितत्वाद् इति विशेषेण अवधेयम्. वस्तूनां मृदुत्वं-कठिनत्वं, शैत्यम्-उष्णत्वं, लघुत्वं-गुरुत्वं, समत्वं-विषमत्वं, मसृणत्वं च एवमादयो विविधाः स्पर्शा अनेन गृह्यन्ते[३].

३.''तेजोगुणविशेषो अर्थो यस्य तत् चक्षुः उच्यते'' (३।२६।४८) इत्युक्त्या ''...निरभेद्येताम् अक्षिणी चक्षुः एतयोः. तस्मात् सूर्यः...'' (३।२६।५५) इति उक्त्या च, **''सूर्यदेवताकं बलाबलतारतम्येन उद्भूतानुद्भूतरूपग्राहकम् इन्द्रियं चक्षुः''**. तच्च ''द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च तेजस्त्वं तेजसः, साध्वि!, रूपमात्रस्य वृत्तयः'' (३।२६।३९।) इति उक्तरीत्या रूपतन्मात्रस्य वृत्तयो द्रव्यस्य आकारसमर्पकत्वं 'गुणता'= द्रव्योपसर्जनतया प्रतीतिः 'व्यक्तिसंस्थात्वं'=द्रव्यस्य या संस्था सन्निवेशः तेनैव तत्प्रमाणप्रतीतिः चक्षुरिन्द्रियविषयत्वम्. द्रव्योपसर्जनतया द्रव्ये गुणतया प्रथमं संयोगसम्बन्धेन द्रव्यज्ञानं ततः संयुक्तसम्बन्धेन रूपज्ञानम् इति अर्थः. अथच रूपग्रहणेन साकं प्रतिबिम्ब-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वापरत्वादि-धर्माणां साक्षाद् ग्रहणं चक्षुषैव. 'साक्षाद्'

इति कुतः चेद्, उच्यते : संख्यादीनाम् असाक्षाद् ग्रहणं स्पर्शादिभिरपि सम्भवत्येव. शुक्लकृष्णलोहितादिवर्णानां वस्तुनो अभावस्य चापि चक्षुषैव ग्रहणं बोध्यम्. एतेषु च अन्येन्द्रिययोगव्यवच्छेदं, चक्षुर्मात्रैकग्राह्यत्वादिति सर्वम् उपपन्नम्. अस्य च, "खद्योताविर्मुखी च अत्र नेत्रे एकत्र निर्मिते, रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषा ईश्वरः" (४।२९।१०) इति वचनात् लोकप्रत्यक्षाच्च दक्षिणवामनेत्रभेदाद् गोलकद्वयं सामान्यमानवानां दिव्यचक्षुः योगचक्षुः इत्यादयस्तु गोलकनिरपेक्षमेव तद् उपरिष्टाद् वक्ष्यामः.

४."अम्भोगुणविशेषो अर्थो यस्य तद् रसनं विदुः" (३।२६।४८) इत्यनेन, "... देवाः वैकारिकाः दश दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः" (२।५।३०) इत्येतेन च वाक्येन **"वरुणदेवताकम् अम्भोगुणविशिष्टं रसग्राहकम् इन्द्रियं रसनम्"** इत्यस्य चतुर्थज्ञानेन्द्रियस्य लक्षणम् आयाति. इन्द्रियेन अनेन मधुराम्ललवणकटुतिक्तकषायानां षड्रसानां दुग्धघृतादिविशिष्टास्वादसंवेदनानां जलगतस्यापि आयनकरस्य निर्विशेषरसस्य च ग्रहणं भवति.

५."भूमेः गुणविशेषो अर्थो यस्य स घ्राणः उच्यते" (३।२६।४८) इति ग्रन्थवचसा, पूर्वोदहृतेन च "दिग्वातार्कप्रचेतोऽश्वि"कि१ इत्यादिना सन्दर्भेण **"नासत्यौ इति ख्याते अश्विनीकुमारयुग्मेन अधिष्ठितं भूमिगुणविशेषेण गन्धग्राहकम् इन्द्रियं घ्राणम्"**. अस्यापि स्थूलशरीरे एकस्यामेव नासिकायां छिद्रद्वयरीत्या गोलकद्वयमेव आस्थेयम्. एतत्प्रमाणन्तु पुरञ्जनाख्यानतात्पर्यनिरूपणाध्याये यथा "नलिनीनालिनी नासे गन्धः सौरभ उच्यते" (४।२९।११) इति. गन्धस्य भेदाअपि तृतीयस्कन्धे "करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथक्, द्रव्यावयववैषम्याद् गन्ध एको विभिद्यते" (३।२६।४५) इति अलम् अतिपल्लवितेन.

एतत् सामान्येन्द्रियप्रत्यक्षं श्रोत्रादिपञ्चेन्द्रियमात्रजन्यं पञ्चविधमेव न

नैयायिकादिवत् षड्विधम् अस्माभिः पूर्वविवेचितरीत्या मनसः इन्द्रियनायकत्वेऽपि तस्य इन्द्रियतया अनभ्यंगीकारात्. तद् इत्थम् : श्रोत्रेन्द्रियस्थूलशब्दसन्निकर्षजं श्रावणम्. त्वगिन्द्रियतद्विषयवद्वस्तुसन्निकर्षजं स्पार्शनम्. चक्षुरिन्द्रियरूपवद्व-स्तुसन्निकर्षजं चाक्षुषम्. रसनेन्द्रियरसवद्वस्तुसन्निकर्षजंरासनम्. घ्राणेन्द्रियगन्ध-वद्वस्तुसन्निकर्षजन्यं च घ्राणजमिति.

यद्यपि वागादिकर्मेन्द्रियाणां ज्ञानजनकत्वं नास्ति किन्तु श्रोत्रादिज्ञानेन्द्रिय-ग्राह्यशब्दाद्युद्भावने, समीपं गत्वा शब्दश्रवणे, करेण पुष्पादीनि आदाय आघ्राणेन, स्पर्शे, रसवद्वस्त्वादाय तस्य आस्वादने च परोक्षतया हि एतेषामपि साहाय्यम् उन्नेयम्.

प्रत्यक्षप्रक्रियातु अत्र वेदान्तप्रसिद्धा वृत्तिमूलैव. तत्तदिन्द्रियद्वारेण अन्तःकरणस्य विषयाकारपरिणामएव अत्र वृत्तिः. यथा तडागोदकं छिद्रेभ्यो बहिः निर्गत्य कुल्याप्रणालिकादिना केदारं प्रविश्य तदाकारं गृह्णाति तथा अन्तःकरणमपि इन्द्रियवर्त्मना विषयम् उपेत्य तदाकारं गृह्णाति. वृत्तिप्रामाण्यन्तु अत्र शास्त्रे "सखाय इन्द्रियगणा ज्ञानं कर्म च यत् कृतं सख्यः तद् वृत्तयः ..." (४।२९।६) "एकादशा आसन् मनसो हि वृत्तयः" (५।११।९) "... बुद्धेः लक्षणं वृत्तितः पृथक्" (३।२६।३०) "बुद्धेः जागरणं स्वप्नः सुषुप्तिः इति वृत्तयः" (७।७।२५) इत्यादौ अवलोकयितव्यम्.

प्रत्यक्षप्रमा अत्र वस्तुतो अद्वयज्ञानापरपर्यायचैतन्यमेव तस्य प्रमातृप्रमाणविषयोपाधिवशादेव व्यावहारिकं त्रैविध्यं, यथा उक्तम् अत्रैव : "ज्ञानम् एकं पराचीनैः इन्द्रियैः ब्रह्म निर्गुणम् अवभाति अर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा" (३।३२।२८) अपि च, "बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम्, दृश्यत्वाव्यतिरेकाभ्याम् आद्यन्तवद् अवस्तु यद् दीपः चक्षुः च रूपं च ज्योतिषो न पृथग् भवेद् एवं धीः खानि मात्राः च न स्युः अन्यतमाद् ऋतात्" (१२।४।२३-२४) इत्यादौ.

ननु चैतन्यमेव अत्र ज्ञानस्वरूपं चेत् सन्निकर्षाणां किं प्रयोजनम्?

इति जिज्ञासायाम् उच्यते : व्यवहारे घट-तद्गतरूपरूपत्व-शब्दशब्दत्वावच्छिन्न-चैतन्याभिव्यञ्जक-वृत्त्युत्पादने संयोग-संयुक्ततादात्म्य-संयुक्ताभिन्नतादात्म्य-रूपाणां सन्निकर्षाणां विनियोगत्वात् न निष्प्रयोजनत्वम्. यद् उक्तम् एकादशे स्वयं भगवतैव "यावद् देहेन्द्रियप्राणैः आत्मनः सन्निकर्षणं संसारः फलवान् तावद् अपदार्थो अविवेकिनाम्" (११।२८।१२) इति.

एवंरीत्या चैत्यसंस्कारोद्बोधात् कामात्मकेन संकल्पविकल्पात्मना मनसः प्रेरणया बुद्धीन्द्रियाणां विषयेषु प्रवृत्तिः पश्चाद्बुद्धिवृत्त्या तेषाम् अनुग्रहः तदनु विषयरसस्य इन्द्रियैः पुनरपि मनसे समर्पणं परस्ताद् "ईश्वरो अहम् अहं भोगी" (भग.गीता. १७।१४) इति रीत्या अहंकारेण कर्तृत्वभोक्तृत्वाभिमानः इति विमूढात्मनः प्रत्यक्षप्रक्रिया. यथाहि अत्र ग्रन्थो : "अन्तःपुरं च हृदयं विषूचिः मन उच्यते. तत्र मोहं प्रसादं वा हर्षं प्राप्नोति तद्गुणैः, यथा-यथा विक्रियते गुणाक्तो विकरोति वा, तथा-तथा उपद्रष्टा आत्मा तद्वृत्तीः अनुकार्यते" (४।२९।१६-१७) "मनएव मनुष्यस्य पूर्वरूपाणि शंसति, भविष्यतः च भद्रं ते तथैव न भविष्यतः सर्वे क्रमानुरोधेन मनसि इन्द्रियगोचराः आयान्ति वर्गशो यान्ति ..." (४।२९।६६,६८) "नाहं ममेति भावो अयं पुरुषे व्यवधीयते यावद्बुद्धिमनोऽक्षार्थगुणव्यूहो हि अनादिमान्" (४।२९।७०) "मनएव, मनुष्येन्द्र!, भूतानां भवभावनं यदा अक्षैः चरितान् ध्यायन् कर्माणि आचिनुते असकृत्" (४।२९।७७-७८) युक्तात्मनस्तु "इन्द्रियाणि इन्द्रियार्थेभ्यो मनसा आकृष्य, तद् मनो, बुद्ध्या सारथिना, धीरः प्रणयेद् मयि सर्वतः" (११।१४।४२) इति अपरैवसात् परिष्टाद् दर्शयिष्यते. इन्द्रियाणां प्राप्यकारित्वविषयेऽपि औपनिषदां राद्धान्तमेव वयम् अव्याकलयामः. तस्माद् घ्राणरसनत्वगिन्द्रियाणां स्वस्वस्थानएव गन्धरसस्पर्शग्रहणम्. चक्षुःश्रोत्रयोस्तु विषयस्थानम् उपेत्यैव रूपशब्दाहरणम् इति सर्वं सम्प्रतिपन्नम्.

इदम् इन्द्रियप्रत्यक्षं निर्विकल्पक-सविकल्पकम् इति द्विधा : इन्द्रियार्थसन्निकर्षस्य प्रथमक्षणे यत् संसर्गानवगाहि भेदरहितं किञ्चिद् इति अनुभूयते तत् निर्विकल्पकम्. मनःसम्पर्कमात्रजन्यं सात्त्विकं, बुद्धिवृत्त्या अननुगृहीतं ज्ञानं, यत्तु बुद्धिकृतभेदभिन्नं राजसं द्वितीयक्षणे नामजात्यादि-योजनासहितम्

अवबुध्यते तत् सविकल्पकं प्रत्यक्षं व्यवहारपरम् इति. यथा, ''कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं च यत्'' (११।२५।२४) ''विकल्पबुद्धीन् च गुणैः विधत्ते'' (११।२२।३०) ''व्यवहृतये विकल्प इषितो अन्धपरम्परया'' (१०।८७।३६) इत्यादौ.

**ख. सामान्येन्द्रियद्वारेण घटपटादौ सन्मात्रसत्तावगाहिज्ञानिनां प्रत्यक्षम् :**

अत्र निर्विकल्पकम् इति सामान्यजनप्रत्यक्षप्रक्रियानुगुणं व्यावहारिकं निरूपितम्. यत्र ब्रह्मावबोधेन योगिनां तत्त्वज्ञानिनां भेदज्ञानं विलीयते तत् शुद्धचिन्मात्रावगाहि द्वितीयं पारमार्थिकं निर्विकल्पकम्. तदेव च सामान्येन्द्रियद्वारेण घटपटादौ सन्मात्रसत्तावगाहि ज्ञानिनां प्रत्यक्षम्.

अत्र पञ्चेन्द्रियैः उपस्थापितेऽपि पञ्चविषयात्मके सांसारिके बोधे विशुद्धमनसां योगिनां न ब्रह्मव्यतिरिक्तम् अन्यद् भानं भवति. घट-पटादौ सर्वत्रापि ब्रह्माकारा वृत्तिरेव जरीजृम्भते, भेदभिन्नम् अखिलं दृश्यजातं च ''नेह नाना इति किञ्चन'' (बृह.उप.४।४।१९) इति श्रुत्युक्तदिशा स्वयमेव विलीयते. अमीषां शरीरादिव्यवहारजातन्तु बाधितानुवृत्यैव संघटते. श्रीमद्भागवते तन्निरूपणं च यथा ''निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यद् मुनय उपासते...'' (१०।८७।२३) ''ध्यानेन इत्थं सुतीव्रेण युञ्जतो योगिनो मनः, संयास्यति आशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः'' (११।१४।४६।) ''यद् विज्ञाय पुमान् सद्यो जह्याद् वैकल्पिकं भ्रमम्'' (११।२४।१) इति.

अस्यैव पारमार्थिक-निर्विकल्पकप्रत्यक्षस्य ''तत् त्वम् असि'' (छान्दो.उप.६।८।७) इत्यादि महावाक्यानाम् अर्थावगमे संगतिः उपपद्यते[४].

**ग. सामान्येन्द्रियद्वारेण भगवद्भक्तानां ''वासुदेवः सर्वम्'' इति 'भावनाप्रत्यक्षम्' :**

पूर्वेनिरूपितज्ञानिप्रत्यक्षाद् इदं प्रमातृस्वरूपमहिम्ना किञ्चित् प्रक्रियाभेद-महिम्नैव व्यतिरिच्यते नतु परमार्थतया. ह्यत्रापि सामान्येन्द्रियद्वारेण सुखदुःखादिरूपार्थसार्थवतः संसारस्य भगवद्भक्तिजन्य-भावनाप्राबल्येन ''वासुदे-

वः सर्वम्'' इति तत्त्वमात्रपरायणत्वात्. तन्निदर्शनानि च अत्र संक्षिप्य समानीयन्ते. यथा : ''खं वायुम् अग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् सरित्समुद्रान् च हरेः शरीरं यत्किञ्च भूतं प्रणमेद् अनन्यः'' (११।२।४१) ''सर्वभूतेषु यः पश्येद् भगवद्भावम् आत्मनः, भूतानि भगवति आत्मनि एष भागवतोत्तमः'' (११।२।४५) ''मनसा वचसा दृष्ट्या गृह्यते अन्यैरपि इन्द्रियैः अहमेव न मत्तो अन्यद् इति बुध्यध्वम् अञ्जसा'' (११।१३।२४) ''इन्द्रियाणि इन्द्रियार्थेभ्यो मनसा आकृष्य तन्मनः बुद्ध्या सारथिना धीरः प्रणयेद् मयि सर्वतः'' (११।१४।४२) इत्यादीनि.

अपिच अत्र एकादशस्कन्धगते श्रीकृष्णोद्धवसंवादे, भगवद्विभूतिवर्णनात्मकः षोडशो अध्यायः समग्रोऽपि अस्यैव निदर्शनभूतः इति नः प्रमितिः.

**घ. योगराद्धदिव्येन्द्रियप्रत्यक्षम् :**

यन्न्यायनये अलौकिकप्रत्यक्षभेदे अन्यतमं, 'योगजप्रत्यक्षं' युक्तयुञ्जानयोगभिन्नं[५], तद् अत्र अस्मिन् भेदे परिगृह्यते अस्माभिरपि द्विविधम्. तत्र **''धारणाध्यानादिचिन्तासहकृतं प्रथमम्, समाधिजन्यम् अप्रयासनिर्वर्त्यञ्च द्वितीयम्''**. यदुक्तम् अस्मत्प्रस्थाने ''अनागतमतीतञ्च वर्तमानम् अतीन्द्रियम्, विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिनः'' (१०।६१।२१) इत्यत्र.

अत्र तपो योगधारणया ध्यानमहिम्ना वा मितयोगिनो गोलकनिरपेक्षतया सूक्ष्मेन्द्रियैः यत् परिच्छिन्नकालपर्यवसायिनीं साक्षात्कृतिम् आतन्वते तस्य एतानि उदाहरणानि प्रादुर्भवन्ति शास्त्रे अस्मिन् -

पृथोः यज्ञे अश्वहन्तारम् इन्द्रम् अनेनैव चक्षुषा ददर्श तत्रभवानत्रिः ''तम् अत्रिः भगवान् ऐक्षत् त्वरमाणं विहायसा'' (४।१९।१२) इति व्यावर्णितदिशा. तथैव रेणुकायाः स्वपत्न्याः मनश्च्यवनम् अनेनैव विज्ञातवान् जमदग्निः, ''व्यभिचारं मुनिः ज्ञात्वा पत्न्याः प्रकुपितो अब्रवीत्'' (९।१६।५) इति एतानि तपोबलकृतप्रत्यक्षस्य निदर्शनानि. यद्यपि इमे अत्रिजमदग्न्यादयो युक्तत्वात् न मितयोगिनः तथापि अत्र परिच्छिन्नकालावसायिनी प्रत्यक्षप्रक्रिया अमीषाम्

इति उदाहरणत्वेन इह गृहीताः. एवं तपोजन्य-योगजप्रत्यक्षस्य अन्येऽपि सन्दर्भाः "भूयस्त्वं तप आतिष्ठ विद्यां चैव मदाश्रयां ताभ्याम् अन्तर्हृदि ब्रह्मन् लोकान् द्रक्ष्यसि अपावृतान्" (३।९।३०).

एवं ध्यानधारणाद्युद्भवानि प्रत्यक्षाण्यपि यानि श्रीमद्भागवते ह्युपवर्णितानि तानि एतत्प्रभेदपर्यवसायीन्येव[६].

अथ समाधिजन्यं शश्वत्कालिकं च योगजप्रत्यक्षमपि : "दृष्ट एव आत्मनि ईश्वरे" (१।२।२१) "पश्यन्ति अदो रूपम् अदभ्रचक्षुषा" (१।३।४) "दुर्भगान् च जनान् वीक्ष्य मुनिः दिव्येन चक्षुषा" (१।४।१८) "अथो महाभाग भवान् अमोघदृक् समाधिना अनुस्मर तद्विचेष्टितम्" (१।५।१३) "भक्तियोगेन मनसि सम्यक्प्रणिहिते अमले, अपश्यत् पुरुषं पूर्णं मायां च तदपाश्रयाम्" (१।७।४) "स वा अयं यत्पदम् अत्र सूरयो जितेन्द्रिया निर्जितमातरिश्वनः पश्यन्ति भक्त्युत्कलितामलात्मना ननु एष सत्त्वं परिमार्ष्टुम् अर्हति" (१।१०।२३) "भगवान् वेद कालस्य गतिं भगवतो ननु विश्वं विचक्षते धीरा योगराद्धेन चक्षुषा" (३।११।१७) इत्येवमादिभिः सन्दर्भैः सर्वहृद्यताम् आधत्ते.

**ङ. भगवदनुग्रहलब्ध-भगवज्जनानुग्रहलब्ध-दिव्येन्द्रिय- प्रत्यक्षम् :**

भगवत्कृपया सिद्धभगवज्जनकृपया च यदा भगवद्भक्तानां सामान्येन्द्रियेष्वेव काचिद् ईदृशी दिव्यशक्तिः आविर्भवति यया ते अप्राकृतानां श्रीमद्भगवद्विग्रहलीलाधामादिकानां साक्षात्काराय सुतरां प्रभवन्ति तदा अयं भेदः स्वरूपम् अवकल्पते. श्रीमद्भागवते अत्र बहूनि उदाहरणानि गोचरयितुं पार्यन्ते. तेषु कानिचनेव अत्र संगृह्यन्ते, यथा -

(१) "तस्मै स्वलोकं भगवान् सभाजितः सन्दर्शयामास परं न यत्पदम्" (२।९।९) इति उपक्रम्य "तद्दर्शनाह्लादपरिप्लुतान्तरो हृष्यत्तनुः प्रेमभराश्रुलोचनः" (२।९।१७) इति पर्यन्तः ब्रह्मकृतभगवत्साक्षात्कारसन्दर्भः.
(२) ध्रुवप्रह्लादादिभगवद्भक्तानां भगवद्दर्शनप्रसंगाः.
(३) दशमे अवतरणप्रसङ्गे "तम् अद्भुतं बालकम् अम्बुजेक्षणम्" (१०।३।९)

इति आरभ्य ''बभूवः प्राकृतः शिशुः'' (१०।३।४६) इत्यन्तं कथानकम्.

(४) दशमे मृद्भक्षणलीलाप्रसंगे यशोदायै: उपाहृतं भगवतो विश्वरूपदर्शनम् (१०।८।३७-४३)

(५) दशमस्कन्धएव उपवर्णितं ''इति सञ्चिन्त्य भगवान् महाकारुणिको हरिः, दर्शयामास लोकं स्वं गोपानां तमसः परम्'' (१०।२८।१४) इत्यादिरूपेण श्रीकृष्णेन बल्लवजनेभ्यः स्वधाम्नः प्रत्यक्षीकरणम्.

(६) तथा च अत्रैव एकोनत्रिंशे अध्याये यमुनाह्रदे अक्रूराय भगवता स्वकीयं विभूतिमद्विष्णुस्वरूपदर्शनप्रदानम्.

एवं भगवज्ज्ञानानुग्रहलब्ध-दिव्येन्द्रियप्रत्यक्षप्रसंगाअपि, भागवते - नारदांगिरोभ्यां प्रत्तविद्यामाहात्म्येन चित्रकेतोः संकर्षणदर्शनकथानकेन (द्रष्ट. : - ६।१६) ''व्यासप्रसादात् श्रुतवान् एतद् गुह्यम् अहं परम्'' (भग.गीता. १८।७५) इति सन्दर्भेण उन्नेयाः तत्तत्वम् अवजिगमिषुभिः इति सर्वम् अवदातम्.

मानसप्रत्यक्षम् -

''अहं सुखी दुःखी, मनसि मे कामो मोहो हर्षो वा जागर्ति'' इत्याद्यन्तःकरणधर्मावबोधकं मानसप्रत्यक्षं सर्वसंवेद्यं न इन्द्रियार्थजन्यम्, उक्तपूर्वरीत्या मनसो अनिन्द्रियत्वात्. तत्र 'आत्ममनःसंयोगा'ख्यः प्रथमः, सुखदुःखादिमनःसन्निकर्षलक्षणः संयुक्तसमवायः च द्वितीयः इति प्राभाकराभिमत-पद्धतिः न अंगीकार्या, अस्मत्प्रस्थाने सुखादीनां मनोवृत्तित्वाभ्युपगमात्. तथाच श्रुतिः ''कामः संकल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिः अधृतिः ह्रीः धीः भीः इत्येतत् सर्वं मनएव'' (बृह.उप.१।५।३). अत्रच, ''अयो दहति'' इति लाक्षणिकव्यवहारवद् आत्मनः सुखाद्याकार-परिणाम्यन्तःकरणैक्याध्यासाद् ''अहं सुखी'' इत्यादि व्यवहारसिद्धिः. बहुलतया उपलभ्यमानत्वाद् ग्रन्थगतोदाहरणवाक्यानि अत्र न उपन्यस्यन्ते.

मुक्तात्मनां नित्यात्मप्रत्यवमर्शात्मकं केवलबोधमयं स्वरूपप्रत्यक्षम् :

अतः परं सूक्ष्मतमम् अव्यक्तं निर्विशेषणम् ''अनादिमध्यनिधनं नित्यं

नच विषयेन्द्रियमनोभिरेव सविकल्पकत्वं विज्ञानं जायतां कृतं बुद्धिप्रवेशेन इति वाच्यम् आगमविरोधाद् ''द्रव्यस्फुरणविज्ञानम् इन्द्रियाणाम् अनुग्रहः'' ( भाग.३।२६।३० ) इत्यादिशास्त्रविरोधात्.

अथ को अयम् अनुग्रहः? इन्द्रियेण उत्पादिते निर्विकल्पके सविकल्पत्वापादनम्. तच्च ज्ञाने नानाकारतापादनद्वारा. नानाकारतापादनं च ज्ञाने इन्द्रियदेशएव मनःसंयुक्ते नतु बुद्धेः बहिर्निर्गमो. मायया तमसा बहिः अर्थाकारस्य इन्द्रियदेशे आक्षेपाद्.

**अत्र सौत्रान्तिकः शंकते :**

चित्तम् एकं चेतनं, बुद्ध्यादि तस्य अवस्थाविशेषएव तत्तद्विषयाकारः प्रवृत्तिविज्ञानरूपः, तस्यां बुद्धावेव अर्थाकारता. प्रथमं इन्द्रियेण विषयसम्पर्के जाते बुद्धौ विषयाकारार्पणम् अर्पितेन च बुद्ध्याकारेण विषयानुमानं जायते. चैतन्यसन्ततिः बुद्धिः स्वतो निराकारा विषयसम्पर्काद् विषयकारा जायते. इन्द्रियविषयाभ्यां बुद्धौ चित्सन्ततिरूपायाम् आकारो जायते, आकारः च बुद्ध्यैव स्वप्रकाशया प्रकाशितः. बाह्यः च अनुमेयो न प्रत्यक्षः. तदतिरिक्तायां बुद्धौ प्रमाणाभावात्. वल्लभमतेतु ज्ञानं सुखादिकं मनोधर्मः, इन्द्रियेण मनसा निर्विकल्पकं ज्ञानं, बुद्धिवृत्तियोगात् सविकल्पकं ज्ञानं जायते. न बुद्धिः अध्यवसायात्मिका एका, अपितु संशयादिसर्वज्ञानानां ऐन्द्रियकानाम् अनुग्राहिका वृत्तिभेदाद् नाना.

यद्यपि आलोचनात्मकं ज्ञानम् इन्द्रियेण, मनसा संकल्पः, बुद्ध्या अध्यवसायः इत्येव शास्त्रान्तरे प्रसिद्धं तथापि भागवतादिशास्त्रप्रामाण्याद् वाल्लभैः तथा अभिमन्यते. एवं बुद्धिपदार्थे द्वयोः विप्रतिपत्तिः. इदन्तु अवधेयं यदा मनसः तद्धर्माणां बुद्ध्यादीनां च जीवात्मनि चित्स्वरूपे अध्यासः तदा तच्चैतन्येनैव साक्षिणा बुद्ध्यादीनां प्रत्यक्षोपपत्त्या मानसप्रत्यक्षत्ववर्णनं गौरवग्रस्तम् , अद्वैतमते अन्तःकरणादीनां साक्षिभाष्यत्वावगमात्. अध्यासस्य, जीवस्वरूपस्य चिद्रूपस्य च समानत्वात्.

यदि बुद्धिः संशयादिकारिणी तर्हि का निश्चयकारिणी? यदि बुद्धिरेव तर्हि तस्याः भेदो वक्तव्यः. अस्त्येव वृत्तिः बुद्धिभेदरूपा इति चेत् तर्हि तस्य भेदहेतुः वक्तव्यः. नानार्थाकारतैव हेतुः. कथं नानार्थाकारता बुद्धेः बहिर्निर्गमाभावाद् इति चेत् मायाविक्षेपात्. मायाविक्षेपात् चेत् तर्हि कथं न भ्रमत्वमेव ज्ञानस्य? इति चेद् उच्यते यदा सत्त्वगुणात्मिकया मायया अर्थाक्षेपः क्रियते तदा प्रमा, यदा राजस्या आक्षेपः तामस्या च विषयावरणं तदा भ्रमः. यद् उक्तं प्रस्थानरत्नाकरे : ननु इन्द्रियार्थसम्प्रयोगोत्तरं सम्प्रयुक्तार्थाकारसमानो बुद्धौ आकारो जायते इति प्रमा भवतु. भ्रमादिकन्तु न भविष्यति, शुक्तादौ तद्विरुद्धस्य रजताद्याकारस्य अभावेन बुद्धौ मायाकृत-तत्समर्पणायोगाद् इति चेद् न, स्वभावगुणानुग्रहादेव तस्यापि सिद्धेः पूर्वोत्पन्नस्य रजताद्याकारकसंस्कारस्य रजसा बहिःक्षेपे सम्प्रयुक्तार्थाकारस्य तमसावरणे च भ्रमस्य सुखेन वक्तुं शक्यत्वात्. एवं नानाविधाद् गुणक्षोभजवृत्तिभेदादेव अन्येऽपि ज्ञानभेदा उन्नेयाः.

एवञ्च यदा विषयेन्द्रियसंयोगाद् निर्विकल्पकं स्वावच्छिन्ने मनसि ज्ञानं जायते. तदा इन्द्रियदेशे बुद्धेः वृत्तिः, तया इन्द्रियानुग्रहे सविकल्पकम् अननुग्रहे न इति. वृत्त्यन्तरेण पूर्ववृत्तिनाशे सविकल्पकस्य संस्काररूपेण अवस्थानं तस्य उद्बोधकैः उद्बोधे मायोपस्थापितमायिकार्थसहकृता स्मृतिः. राजसैः रागादिभिः संस्कारप्राबल्ये मायया विषयाकारावरणपूर्वकं मायिकपदार्थसहितस्य ज्ञानस्य गोलकाग्रभागे क्षेपे भ्रमः. किञ्चिदावरणे संशयः. सत्त्वेन सर्वथा आवरणभंगे विक्षेपस्यापि निवृत्तौ विशेषदर्शनम् इत्यादि. वृत्तिविषयातु वृत्तिः न भवति.

तत्र अयं क्रमो : दैवानुकूल्येन अन्तर्यामिणा मनः तत्तत्कार्यार्थं प्रेर्यते. तच्च इन्द्रियप्रेरणाय तत्तदिन्द्रियेण संसृज्यते. तत्र तत्तदिन्द्रियदेवतानुकूल्ये विषयसंसृष्टैः इन्द्रियैः स्वावच्छिन्ने मनसि पूर्वं निर्विकल्पम् उत्पाद्यते. तदा इन्द्रियदेशे बुद्धेः वृत्तिः. ततो बुद्ध्यापि वृत्तिद्वारा तदनुग्रहे सविकल्पं भवति इति (पृ.१४८).

अत्र विचार्यं : मनसि इन्द्रियैः विषयसंसृष्टैः निर्विकल्पकं 'किञ्चिद् एतद्' इत्याकारकं विज्ञानम् उत्पाद्यते, वृत्त्या अनुग्रहात्तु सविकल्पकम् इति. बुद्धिवृत्तिः अर्थाकारावस्था बुद्धेः बहिर्निर्गमाभावेऽपि इन्द्रियदेशे मायया क्षिप्तो विषयाकारः तदर्थाकारा बुद्धिः जायते. इन्द्रियैः निर्विकल्पके जनिते सविकल्पके जननीये वृत्त्या अर्थाकारया अनुग्रहो, ज्ञाने विषयाकारसमर्पणं क्रियते इति. एवं तर्हि बुद्धिवृत्तिभेदाः एवं प्रमाविज्ञानानि. यत्रच वृत्तिः नास्ति तद्विकल्परहितं ज्ञानम्. मनसः तर्हि कः उपयोगः इन्द्रियैरेव बुद्ध्यनुग्रहाननुग्रहाद् ज्ञानद्वयं जन्यताम् कृतं मनसा इति चेद्, उच्यते क्व तर्हि ज्ञानम् उत्पद्येत इन्द्रिये बुद्धौ वा? न उभयोः तथानभ्युपगमात्. नच आत्मनि, आत्मना सह उभयोः सम्पर्काभावात्. नच इन्द्रिये, इन्द्रियस्य ज्ञानाधारत्वाभावात्, नापि बुद्धौ तस्याः अनुग्रहमात्रकारित्वात्. अतो अगत्या ज्ञानादितादात्म्याधारतया मनोऽपि तत्र अंगीकर्तव्यम्.

अत्र अद्वैतिनो : मनोबुद्धी अन्तःकरणस्य वृत्तिभेदावेव. मनः संकल्पयति बुद्धिवृत्तिस्तु निश्चिनोति इति. मनोवृत्तिरेव ज्ञानम् इति वदन्ति. ननु वल्लभमते ज्ञानं जडं चेतनं वा? स्फुटमेव ज्ञानस्य जडत्वं नहि इन्द्रियादिभिः जडवर्गैः चैतन्यं कर्तुं शक्यते, चितो नित्यत्वात्. ज्ञानस्य जडत्वे च विषयप्रकाशो न स्यात्. अद्वैतमते च जडायाअपि बुद्धिवृत्तौ तदवच्छेद्येन चैतन्येन अवभासितत्वात् विषयप्रकाशः सम्भवति. सौत्रान्तिकमते च चित्( विज्ञान )सन्ततिरेव बुद्धिरिति तस्याः अर्थाकारसहितायाः स्वप्रकाशत्वादेव विषयप्रकाशः इति चेद् न, बुद्धेः सत्त्वगुणायाः प्रकाशकत्वोपपत्तेः बुद्धिरेव अर्थप्रकाशिका. नच बुद्धेः स्वभावजडायाः कथं प्रकाशकत्वम् इति वाच्यं, सत्त्वगुणस्यैव प्रकाशकत्वम् नतु वृत्तेः प्रकाशकत्वम्. एतच्च सौत्रान्तिकनये न अंगीक्रियते. अद्वैतेतु सत्त्वस्यापि चैतन्याध्यासादेव प्रकाशकत्वम्. नतु वृत्तेः स्वाभाविकः प्रकाशः. ज्ञानाद्यध्यासस्तु जीवात्मनि चिद्रूपे वाल्लभानामपि इष्टएव अन्यथा "अहं ज्ञानी"-"अहं सुखी" इत्यादिप्रत्ययो न स्यात्. तदध्यासादेव ज्ञानादेः बुद्धिवृत्तिरूपस्य प्रकाशोपपत्तिः भवेत्. नहि चैतन्यं न प्रकाशते इति न. नहि गुणप्रकाशादेव वस्तुप्रकाशः, अपितु चैतन्यादेव स्फुटप्रकाशः, 'साक्षात्करोमि'

'जानामि' इत्यादिव्यवहारात्.

अतः क्षणिकायामपि चित्सन्ततौ सविषयत्वसाकारत्वार्थं बहिर्विषयानुमेयाः मन्तव्याः, अर्थाकारतां विना विज्ञानवैचित्र्यानुपपत्तेः. साकारता अवश्यं मन्तव्या साच विषयद्वारैव सम्भवति. विषयाः च चिति विज्ञाने स्वाकारम् अर्पयन्ति. यद् उक्तं सर्वसिद्धान्तसंग्रहे -

नीलपीतादिभिः चित्रैः बुद्ध्याकारैः इह आन्तरैः।
सौत्रान्तिकमते नित्यं बाह्यार्थस्तु अनुमीयते॥
अर्थेन घटयति एनां नहि मुक्त्वा अर्थरूपताम्।
तस्मात् प्रमेयाधिगतेः प्रमाणं मेयरूपता॥

अर्थरूपताम् अर्थाकारतां मुक्त्वा एनां बुद्धिं चित्सन्ततिं न कश्चिद् घटयति अपितु अर्थेन अर्थाकारेणैव घटयति, "घटं जानामि"-"पटं जानामि" इत्यादिरूपेण. तस्मात् प्रमेयाधिगतेः प्रमाणम् बुद्धेः मेयरूपता अर्थसारूप्यमेव इति भावः.

तस्मात् प्रत्यक्षं चित्तचैत्तं, चतुर्विधान् प्रत्ययान् (कारणसमुदायं) प्राप्य जायते. तेच चत्वारः प्रत्ययाः प्रसिद्धाः आलम्बनसमनन्तरसहकार्यधिपतिरूपाः. तत्र नीलाद्यवभासस्य ज्ञानस्य नीलादिविषयः आलम्बनप्रत्ययो अतएव विज्ञाने नीलाकारता भवति. पूर्वविज्ञानमेव समनन्तरप्रत्ययः. तस्मात् नीलादिविषयप्रकाशनसामर्थ्यं लभ्यते. आलोकादिरेव सहकारिकारणं, तस्मात् नीलादिविज्ञाने स्पष्टता भवति. चक्षुरादिरेव अधिपतिप्रत्ययः तस्माच्च विषयग्रहणप्रतिनियमो भवति. रूपं चक्षुषा गृह्यते. रसः रसनया इत्यादि.

विज्ञानातिरिक्तचैतन्ये प्रमाणं नास्ति. नच तदतिरिक्तात्मसिद्धिः.

वाल्लभास्तु चित्तसन्तानः आत्मा इति पक्षं पूर्वाचार्योक्त-वाचोयुक्तिभिरेव आक्षेपयन्ति.

इदमपि विचारणीयं यद् वाल्लभमते चक्षुषि रूपप्राप्तिः प्रतिबिम्बभवनरूपैव. सातु प्राप्तिः मायया भवति. एवं बुद्ध्याकारसमर्पकत्वं प्रतिबिम्बस्यैव चक्षुषि विषयसन्निकर्षे रूपस्य प्रतिबिम्बो रूपप्रतिबिम्बएव बुद्धेः आकारसमर्पकः. सौत्रान्तिकनये बाह्यविषयाणां इन्द्रियसम्पर्के चित्तसन्ततौ आलयविज्ञानेन बाह्यरूपप्रतिबिम्बो, नवा बाह्यार्थारोपः, नवा चक्षुषि प्रतिबिम्बस्य बुद्धौ आकारार्पकत्वम् अपितु इन्द्रियद्वारा बुद्धेः अर्थाकारता. साच अर्थाकारता विषयसारूप्यं बुद्धेः प्रवृत्तिविज्ञानसिद्धये. नहि विज्ञानम् अस्पृशन् बाह्यो विषयो भोगाय भवति. विषयाकारो न अध्यारोपितो अपितु विषयवासनारूपतापत्तिरेव. एवञ्च सवासनं विज्ञानं प्रतिक्षणम् उत्पादविनाशशालि जायते. इदमपि विचारम् अर्हति : अन्तःकरणाध्यासात् सर्वं ज्ञानं जीवात्मा स्वस्मिन् अभिमन्यते इति वाल्लभाः. सौत्रान्तिकमते अन्तःकरणाध्यासास्वीकारः. अन्तःकरणं चित्तमेव. स्वस्मिन् स्वस्य अध्यासायोगात्. चैतन्यसन्ततिः बुद्धिः सा स्वयं निराकारा अर्थच्छायया अर्थाकारा भवति. यथा जपाकुसुमसान्निध्यात् मणिरपि लोहितो भवति. तादृशाकाराद् उत्तरविज्ञानसन्ततौ यदि सएव आकारः तर्हि स साकारा बुद्धिः स्मृतिः. प्रत्यक्षेण आकारः चेत् ज्ञानं प्रत्यक्षं अनुमानेन आकारः चेद् अनुमितिः इति प्रत्यक्षानुमितिस्मृतिरित्यादिप्रवृत्तिज्ञानानि विषयसरूपाणि जायन्ते.

बुद्धिसन्ततौ पूर्वं कदाचित् रजतादिज्ञानजन्यसंस्कारसद्भावात् इन्द्रियदोषाद् रजताद्यविषयेऽपि रजतबुद्धिः भवति सा बुद्धिः भ्रमः इति. तदेवं निर्गलितो अर्थः : सौत्रान्तिके बुद्धिः चित्सन्ततिः आलयविज्ञानरूपा विषयाकाराकारिता. विषयाकारः विषयवासना. अर्थाकारेणैव बाह्या अनुमेयाः पुष्ट्या भोजनमिव. बाह्याः प्रत्यक्षाः न भवन्ति. प्रत्यक्षं स्वसंवेदनं योगजं मनोविज्ञानम् इति इन्द्रियजन्यं प्रत्यक्षं न अभ्युपगम्यते.

किञ्च बौद्धमते अभावो अनुमानगम्यो न प्रत्यक्षगम्यः. तथाहि पक्षसत्त्वादित्रिरूपस्य लिंगस्य त्रयः प्रकाराः : अनुपलब्धिः स्वभावः कार्यम् इति. अनुपलब्धिः अभावावेदिका, स्वभावः कार्यञ्च भावावेदके ( न्यायबिन्दुः

पृ. २०८).

वाल्लभमते च अभावः प्रत्यक्षगम्यएव. यदि अनुपलब्धिः अनुमानं यदि वा प्रमाणान्तरं तदुभयपक्षेऽपि अभावः तिरोभावरूपो वस्तुनो अवस्थाविशेषो वा आविर्भावरूपो वा न अनुपलब्धिगम्यः. विवृतं च एतत् प्रस्थानरत्नाकरे.

अत्र इदं बोध्यम् : अभावप्रत्यक्षवादिनापि उपलब्ध्यभावाद् अभावज्ञाने हेतुता क्लृप्तैव तत्र करणत्वमात्रं कल्प्यते. किञ्च अभावस्य इन्द्रियसन्निकर्षाभावात् न प्रत्यक्षज्ञानगोचरता. नच संयुक्तविशेषणता सन्निकर्षः, तत्र प्रमाणाभावात्. संयुक्तविशेषणतासन्निकर्षेणैव जात्यादेरपि प्रत्यक्षसम्भवे संयुक्ततादात्म्यादेः पृथक् सन्निकर्षाभावात्. किञ्च संयुक्ते प्रथमं सिद्धे अभावस्य तत्र विशेषणतया भानं स्यात् विशेषणतया ग्रहे च उक्तसन्निकर्षेण अभावग्रहः इति व्यक्तम् अन्योन्याश्रयत्वम्. तस्माद् अभावस्य प्रत्यक्षता न्यायमतानुसारिणी.

**क्षणिकत्वखण्डनम् :**

अत्र विमृश्यते बाह्यार्थाः तावद् विज्ञानवासनावैचित्र्यनिर्वाहार्थं सौत्रान्तिकैः अंगीक्रियन्ते. तेच अनुमेयाः न प्रत्यक्षाः क्षणिकत्वात्. क्षणिकत्वञ्च द्वितीयक्षणध्वंसप्रतियोगित्वम्. सन्निकर्षक्षणोत्तरक्षणे नष्टा बाह्याः कथं प्रत्यक्षप्रतीतिगोचराः स्युः. वस्तुसन्निकर्षक्षणे एवं सन्निकृष्टाः भावाः चित्ते स्वाकारम् अर्पयन्ति. तेन अर्पितेन च आकारेण पुष्ट्या भोजनादिमिव बाह्यार्थाः अनुमीयन्ते. यद् उक्तम् ''अर्थेन घटयति एनां नहि मुक्त्वा अर्थरूपतां तस्मात् प्रमाणाधिगतेः प्रमाणं मेयरूपता'' नहि वित्तिसत्तयैव तद्वेदना युक्ता. तस्याः सर्वत्र अविशेषात्. तान्तु सारूप्यम् आविशत् सरूपयितुं घटयेद् इति च. तथाच वित्तौ अर्थसारूप्यमेव बहिः अर्थानुमापकं भविष्यति.

अत्र उच्यते : क्षणिकत्वाद् भावानां प्रत्यक्षत्वं न उपपद्यते इति

अयुक्तं, भावाः क्षणिकाः सत्त्वात् प्रदीपकलिकावद् इत्याद्यनुमानं प्रत्यक्षप्रत्यभिज्ञानाबाधितम्. अस्तिच पूर्वापरक्षणवर्त्तिभावयोः एकत्वस्थैर्यसाधकं निष्कम्पम् अबाधितं प्रत्यभिज्ञानं ''तदेव इदम्'' इति. इदं प्रत्यभिज्ञानं घटादेः वस्तुनः स्थैर्यं विना अनुपपद्यमानं बलादेव एकस्य वस्तुनः तत्कालैतत्कालसम्बन्धित्वं साधयति. नच द्वितीयादिक्षणे निरन्वयविनाशम् उपगतस्य वस्तुनो अनन्तरक्षणे तदनुगमाभावात् उक्तप्रत्यभिज्ञानस्य उपपतिः भविष्यति. नच एतत् प्रत्यभिज्ञानं भ्रमो अबाधितविषयकत्वात्.

किञ्च सत्त्वात् क्षणिकत्व साधनं विरुद्धम्. सत्त्वं नाम त्रिकालाबाध्यत्वं तच्च कथं क्षणिकत्वसाधनम्. नच अर्थक्रियाकारित्वमेव सत्त्वम् तच्च क्षणिकत्वेन व्याप्तम् इति वाच्यं, विकल्पासहत्वात्. तथाहि अर्थक्रियाकारित्वं सद् वा असद् वा? सत्त्वे तत्रापि अर्थक्रियाकारित्वं वक्तव्यम् इति अनवस्था. असत्त्वे असत्त्वापत्तिः. अतो असतो अर्थक्रियाकारित्वेन क्षणिकत्वव्यवस्थापनासम्भवात्. अतः सत्तासामान्ययोगित्वम् अबाध्यत्वं वा सत्त्वं वक्तव्यम्. तथाच न क्षणिकत्वसिद्धिः. घटादयो अक्षणिकाः प्रमाणभूतप्रत्यभिज्ञाविषयत्वाद् व्यतिरेकेण वन्ध्यापुत्रादिवत्. किञ्च क्षणिकत्वपक्षे अर्थक्रियापि न उपपद्यते क्षणिकत्वादेव. नहि निर्व्यापारस्य अर्थक्रिया दृष्टा. व्यापारकाले अवस्थायित्वे क्षणिकत्वभंगप्रसंगः.

किञ्च पूर्वक्षणस्य निरुद्ध्यमानस्य निरुद्धस्य वा उत्तरक्षणहेतुत्वं न स्यात्. नहि अभावाद् भावोत्पत्तिसम्भवः. सम्भवे वा सर्वत्र सर्वस्य उत्पत्तिप्रसंगो अभावाविशेषात्. ''उत्तरोत्पादे च पूर्वनिरोधाद्'' इत्यादिसूत्रे क्षणिकत्वस्य निराकृतत्वात्.

एवं बाह्यार्थस्य अक्षणिकत्वे यथायोग्यं प्रत्यक्षगम्यत्वम् उपपद्यते इति वाल्लभाः वदन्ति अन्ये च प्रत्यक्षवादिनः. अप्रत्यक्षे कस्मिंश्चिद् बाह्यार्थे बाह्यार्थानुमानमपि दुःसम्पादकम्.

**सविकल्पकस्यापि प्रत्यक्षत्वम् :**

सौत्रान्तिकादिसौगताः प्रत्यक्षं निर्विकल्पमेव कल्पनापोढत्वात्. सविकल्पकप्रत्ययस्तु कल्पनायुक्तत्वाद् अप्रमाणम्. कल्पनाच जातिगुणकामादि-संसर्गयोग्यता इति वदन्ति. तदपि न युक्तिमत्. तथाहि इन्द्रियार्थसन्निकर्षेण जायमानं ज्ञानं निर्विकल्पकं सामान्यरूपम् एकं जायते तत्र बुद्धिवृत्त्यनुग्रहात् सविकल्पकं प्रत्यक्षं व्यवहारोपयोगि ज्ञानं जायते. बुद्धिवृत्तिश्च निर्विकल्पके अर्थाकारम् आरोपयति. अतो निर्विकल्पकं ज्ञानं बुद्धिवृत्त्युपनीतार्थाकारेण युक्तं सविकल्पकं ज्ञानं इन्द्रियजन्यत्वादेव प्रत्यक्षं जायते.

ननु सौत्रान्तिकमतेऽपि ज्ञाने अर्थाकारता जायते. इन्द्रियेण यो अर्थो ग्राह्यः सः तत्क्षणे स्वाकारम् अर्पयति विज्ञाने. तथाच विज्ञानं साकारं जायते साकारमेव ज्ञानं निर्विकल्पकं कल्पनापोढत्वात्. तच्च प्रमाणभूतम्. वल्लभमते तु निर्विकल्पकं निराकारं बुद्धिवृत्तेः प्राग् ज्ञाने अर्थारोपाभावात् निर्विषयत्वं निर्विकल्पकज्ञानस्य स्यात्. किञ्च कोऽयं बुद्धिवृत्त्यनुग्रहः. यदि निर्विकल्पे जायमाने अर्थाकारारोपः, तर्हि स आरोपो न उपपद्यते. बुद्धौ अर्थस्य अभावात्. बुद्धिवृत्तेरपि बहिर्देशे निर्गममन्तरा असम्भवात्.

किञ्च इन्द्रियेण अर्थसंयोगः, मनःसंयोगः, अविकल्पज्ञानोत्पत्तिः पुनः बुद्धिवृत्तिः तया ज्ञाने अर्थारोपः इति गुर्वी अप्रमाणिकी च प्रक्रिया. तद्वरं इन्द्रियेण ग्राह्यार्थस्यैव आकारार्थकत्वम् इति चेद् न स्यादेवं यदि विज्ञानसन्ततिः चित्तापरपर्याया अनुच्छिन्ना अशाश्वती आलयविज्ञानरूपा श्रुत्यादिप्रमाणवादैः अंगीक्रियते युक्तिभिः उपपद्येत. किन्तु तथा नास्ति. अतः कुत्र आकारार्पणं स्यात्. अप्रमाणिकम् अण्वपि कल्पनं न युक्तिमत् प्रमाणिकञ्च गुरुभूतमपि अंगीकर्त्तव्यम्. खण्डितश्च अयम् अर्थः पूर्वाचार्यैः तथाहि : क्षणिकचित्तसन्ततिः आलयविज्ञानं नाम यदि स्वीक्रियते तर्हि तेन इदं सरूपम् इति ज्ञानस्य पूर्वोत्तरक्षणवर्त्तिसदृशपदार्थकस्य कर्तुरेकस्य अभावात् सादृश्यनिमित्तं प्रतिसन्धानं न स्यात्. यदि एकः ग्रहीता कल्प्यते तदा क्षणद्वयसम्बन्धित्वात् तस्य क्षणभंगः. नच कल्पितएव उक्तज्ञाने आकारः

नतु बाह्यः कश्चिद् अर्थः वासनावैचित्र्यादेव विज्ञाने साकारे ते अर्थाः भासन्ते. अतः एकमेव विज्ञानसादृश्याकारम् इति न पूर्वोत्तरक्षणवर्तिनौ बाह्यौ पदार्थौ इति वाच्यम्. तेन इदं सदृशम् इति वाक्यप्रयोगस्य आनर्थक्यप्रसंगात्. किञ्च उक्तविज्ञाने प्रतिभासमानां पदार्थानां विज्ञानाभेदे सति अर्थानामपि अभेदः प्राप्नोति. तथा च इतेरेतरभेदेन लोके प्रसिद्धा पदार्थाः बाध्येरन् एवं सति बाह्यस्य लोके प्रसिद्धस्य कस्यचिद् अर्थस्य विज्ञानव्यतिरेकेण अभावात् स्वपक्षसिद्धि-परपक्षनिरासरूपो विवादो न स्यात्. विज्ञानाकारत्वे हि विकल्पप्रतिभासिनां नित्यत्वानित्यत्वादीनाम् एकार्थविषयत्वाभावात् ज्ञानानाञ्च धर्मिणां भेदात् विरोधाभावात्. एकधर्मिक विप्रतिषिद्धधर्मद्वयाभ्युपगमस्य विवादरूपत्वात्.

यदि सौत्रान्तिको ब्रूते ''अस्ति बाह्यो अर्थः. सतु क्षणिकः निर्विकल्पके चकास्ति. सविकल्पकप्रत्ययास्तु विकल्परूपाः बाह्यार्थगतसादृश्याकारे निर्विकल्पकगतसादृश्याकारेण प्रतिभासन्ते. अतः बाह्यार्थसद्भावे न विवादहानिः इति. नच स्वग्राहकस्य ज्ञानस्य स्वयं तावद् ग्राह्यम् आन्तरं कथं तस्य बाह्याकारविषयत्वम् इति वाच्यम्. विकल्पविषयद्वैविध्यात्. द्विविधो हि विकल्पानां विषयो ग्राह्यः च अध्यवसेयः च. स्वाकारस्य निर्विकल्पस्य अवसायाद् 'अधि'=उपरि अवसेयो 'अध्यवसेयः'. अध्यवसेयो बाह्यः. तेन हानोपादानादिप्रवृत्तिः लोके सिध्यति स्वप्रतिभासे आन्तरे बाह्यात्मत्वाध्यासाद् इति. तदपि न युक्तम्, आन्तरस्य निर्विकल्पस्य ज्ञानाकारस्य तद्विपरीतबाह्याकारेण अध्यवसायस्य असम्भवात्. अध्यवसायो यदि आरोपः तर्हि कस्य-कुत्र इति वक्तव्यम्. आन्तरस्य ज्ञानाकारस्य बाह्ये आरोपः चेत् सच बाह्ये गृह्यमाणे अगृह्यमाणे वा? तदपि बाह्यं स्वलक्षणं सामान्यं वा? अक्षसन्निकर्षेण विज्ञाने जायमानम् अर्थसारूप्यं विकल्पेन अनुमानेन गृह्यमाणे बाह्ये स्वलक्षणे न सम्भवति. नहि विकल्पस्य स्वलक्षणं विषयः. नच सामान्यमेव बाह्यं तत्र गृह्यमाणे अर्थाकारारोपः इति, तदपि न, व्यक्तिग्रहणं विना सामान्यस्य गृहीतुम् अशक्यत्वात्. अगृह्यमाणे बाह्ये स्वाकारस्य आरोपे स्वाकारएव स्यात्. नतु बाह्यः

इति एवम् अधिष्ठानप्रतिभासासम्भावाद् बाह्ये ज्ञानस्वरूपस्य नारोपः. आरोप्यस्य अस्फुरणादपि नारोपः. पूर्वं स्वाकारग्रहणं पश्चाद् बाह्यार्थारोपणं च अशक्यम्. ज्ञानस्य क्रमविरहिणो ग्रहणारोपणयोः असम्भवात्. नच यदैव गृह्णाति तदैव आरोपयति इति युक्तं स्वाकारस्य स्वसंवेदनप्रत्यक्षतया अतिविशदत्वात् बाह्यस्य च आरोप्यमाणस्य अविशदत्वात् उभयोः भेदः स्यात्. एवम् अध्यवसायो असम्भवः. खण्डितश्च अयं सौत्रान्तिकवादः सूत्रभाष्यभामत्यादिषु वाल्लभग्रन्थेषु च. ततश्च बाह्यार्थो अक्षणिको यथायोग्यं प्रत्यक्षेण बोध्यः इति वाल्लभानाम् आशयः. एवञ्च सविकल्पकस्यापि प्रत्यक्षत्वं सम्भवति. इन्द्रियविषयसन्निकर्षजननीये निर्विकल्पे बुद्ध्या वृत्तिरूपया सविकल्पकत्वं जायते.

अर्थारोपः :

इदं विचार्यते निर्विकल्पके बाह्यार्थारोपो वल्लभमतेऽपि सौत्रान्तिकमतेऽपि. प्रकारस्तु उभयोः वर्णितः. तत्र विषयेन्द्रियसन्निकर्षे जाते चित्सन्ततौ विषयसारूप्यं भवति तच्च स्वाकारविज्ञानं निर्विकल्पकं तादृशाकारस्य बाह्ये आरोपाद् प्रवृत्तिः. वाल्लभेतु विषयेन्द्रियसम्पर्काद् मनसि निर्विकल्पकं जायते. तत् किं निर्विषयं सविषयं वा? सविषयत्वे केन विषयाकारः आरोप्यते बुद्धिवृत्तेः पश्चाद् भावितत्वाद्. यदि तद् निर्विकल्पकं ज्ञानं स्वभावादेव विषयम् अवगाहते चेद् विषयप्रकारमपि अवगाहेत, बुद्धिवृत्तेः का आवश्यकता?. किञ्च बुद्धौ यदि विषयाः सन्ति इति मतं तर्हि योगाचारमतापत्तिः नहि बुद्धौ बहिर्वद् विषयाः सम्भवन्ति अपितु वासनारूपतयैव. नच मायया बुद्धौ आक्षिप्यन्ते इति मतम्. मायया मनस्यपि विषयाकाराक्षेपसम्भवात्. किंवा मायया निर्विकल्पकज्ञानएव विषयाकाराक्षेपसम्भवाद् व्यर्थो बुद्धिवृत्त्यंगीकारः.

किञ्च इन्द्रियार्थसन्निकर्षाद् मनसि यद् ज्ञानं जायते तत् किं मनःपरिणामरूपम्? किंवा मनःसमवायी मनोधर्मः? किंवा मनसि अर्थाकारारोपः? प्रथमे निर्विकल्पकं मनःपरिणामं, सविकल्पकं च बुद्धिपरिणामः

इति गौरवम्. वृत्तिरपि बुद्ध्यवस्थाविशेषएव तैः अंगीक्रियते.

द्वितीये समवायस्य अस्वीकृत्वात् मनोधर्मो ज्ञानं चेत् तद् बुद्धिवृत्तिः किम् उपकरिष्यति. अथ बुद्धिः मनएकमेव अन्तःकरणरूपम् इति? तदपि न, स्वसिद्धान्तविरोधात्.

अपिच माया यदि भगवतो व्यामोहिका शक्तिः तर्हि सर्वस्य विज्ञानस्य भ्रान्तत्वापत्तिः. यदि सर्वभवनरूपाशक्तिः तर्हि विज्ञानस्य भ्रमत्वानापत्तिः. किञ्च वाल्लभमते ज्ञानं जडं चेतनं वा? जडत्वे विषयप्रकाशनासम्भवात्. चेतनत्वे आत्मनो जडत्वापत्तेः, एकत्र चैतन्यद्वयानंगीकारात्. अथ चैतन्यं चेतनस्य आत्मनो धर्मएव इति मतं तर्हि शरीरादिसंघातस्य आत्मनि अध्यासात् आत्मचैतन्येनैव प्रकाशसम्भवात् अलं बुद्धिवृत्त्या मानसे ज्ञाने अर्थारोपेण.

किञ्च बुद्धिवृत्तिः बुद्धेः अर्थाकारावस्थाविशेषः इति तदपि न उपपद्यते. बुद्धौ विषयाभावात् तस्य विषयस्य च घटादेः बाह्यत्वात्. मायया आक्षेपोऽपि समानाकारस्यैव न वस्तुतो विषयस्य तथानुभावात्. एतस्माद् वरं बुद्धेः बहिःनिःसरणमेव तथात्वे सिद्धान्तहानिः. बहिःनिःसरणाभावे बुद्धौ अर्थाकारो विषयेन्द्रियसम्पर्काद् इति सौत्रान्तिकमतप्रवेशः इत्येवमादयो विचाराः समाधेयाः सम्भवन्ति.

**बौद्धमतखण्डनम् :**

तदेतत् सर्वं तर्कप्रभवम्. नहि तर्केण अप्रमाणभूतेन वस्तुतत्वं व्यवस्थायितुं शक्यते, "**तर्काप्रतिष्ठानात्**" इति स्मरणात्. एवञ्च यथाप्रमाणमेव वस्तुतत्त्वावगतिः. नहि वाल्लभैः अप्रमाणं किञ्चिद् उच्यते यथाशास्त्रम् अवगतिः क्रियते. किं मनः, का बुद्धिः, को अहंकारः, किं चितम्, इत्यादि सर्वं यथाशास्त्रमेव उच्यते. नहि शास्त्रं व्यवस्थितम् आप्तप्रकाशं तर्कैः व्याकुलीकर्तुं शक्यम्. बाह्यैश्च बौद्धैः स्वमतिप्रकल्पनादेव स्वस्य

बहुप्रलापित्वं ख्याप्यते.

सौत्रान्तिकैः विज्ञानसन्ततिः तस्याअपि क्षणिकत्वं बाह्यस्यापि क्षणिकत्वम् इत्यादिसर्वं स्वमतिकल्पितमेव सर्वथा अनुपपन्नम् उच्यते. सर्वमेव विश्वं परमेश्वरान्तम् इति अविर्भावतिरोभावशक्तिभ्याम् उत्पन्नम् इति नातिरोहितं वेदशास्त्रविदाम् इति दिक्.

......+......

## संगोष्ठ्युत्तरलेखनम्

**गो.श्या.म.**

बौद्धशांकराद्यनेकमतेषु पाण्डित्यनिकषभूतैः मूर्तिमत्सौमनस्यैः तत्रश्रीपारसनाथद्विवेदिमहाभागैः सौत्रान्तिकवाल्लभवेदान्तमतयोः प्रत्यक्षप्रमाविषयके तौलनिकविमर्शपरे अस्मिन् आलेखपत्रे उभयोः मतयोः यत् तुलनात्मकस्वरूपप्रतिपादनं तदुभयोः च मतयोः सम्भावितपूर्वोत्तरपक्षावपि स्वशेमुषिविशेषप्रकर्षेण समुद्भाव्य यच्च निरूपणं कृतं तद् एतन्महाभागेतरेण दुर्वहः खलु कर्तव्यभारो केनापि निर्वोढुं शक्यः!

तेन यद्यपि उत्थिताकांक्षाप्रयुक्तं किमपि वक्तव्यं नावशिष्यते, श्रीमद्भिः पारसनाथमहाभागैरेव निराकरणप्रकारस्यापि द्योतितत्वादेव. तथापि विषये अस्मिन् योहि **''वल्लभमतेतु निर्विकल्पकं निराकारं बुद्धिवृत्तेः प्राग् ज्ञाने अर्थारोपाभावात् निर्विषयत्वं निर्विकल्पकज्ञानस्य स्यात्. किञ्च कोऽयं बुद्धिवृत्त्यनुग्रहः? यदि निर्विकल्पे जायमाने अर्थाकारारोपः, तर्हि सः आरोपो न उपपद्यते. बुद्धौ अर्थस्य अभावात्. बुद्धिवृत्तेरपि बहिर्देशे निर्गमम् अन्तरा असम्भवात्''** इति यौक्तिकाक्षेपो दर्शितः तत्र वाल्लभदृष्ट्या इह यत् किमपि यौक्तिकं समाधानं मनसि स्फुरति तद् उत्थाप्याकांक्षापूर्त्यै आवेद्यते : न तावद् अस्माकं मते निर्विकल्पज्ञानस्य सर्वथा विषयाकारराहित्यम् आपादयितुं शक्यं ''पुरोवस्थितम् इदं किञ्चिद्''

इति विषयाकारस्य अभ्युपगतत्वेन निर्विकल्पकज्ञाने अभ्युपगतत्वेन न तत्र निर्विषयकत्वापत्तिः, नामगुणकर्मसामान्यधर्माद्यनुल्लेखिन्याः अनुभूत्याः समनस्केन्द्रियेण निर्विकल्पकज्ञानवता पुरुषेण अपलपितुम् अशक्यत्वात् च. नच एतादृशे विशेषानुल्लेखिनि ज्ञाने भासमानं पुरोवस्थितं स्फीतालोकवर्ति वस्त्वपि दूरदेशस्थवस्तुवत् स्वविशेषाकारं निगूहत्येवेति तत्र बुद्धिवृत्तिकृतविशेषाकारापेक्षैव न स्यात्. पश्चात्तु पूर्वानुभूत्यधिगतसंज्ञादिसंस्काराणां संकल्पविकल्पपरे मनसि समुत्थानेन च बुद्धिं प्रति मनसा च प्रदर्शितेषु सत्सु तामसराजससात्त्विकान्यतमगुणोद्रेकजनितया च बुद्धिवृत्त्या तेषु संकलितानां अनवबोधसंशयभ्रमादिवृत्तयः कुतो न समुपजायेयुः? सर्वस्यापि प्रत्यक्षावभासस्य इह परस्परसापेक्षदुर्लक्ष्योत्तरोत्तरावस्थाभेदेन शतपत्रवेधवद् झटिति जायमानत्वेन बाह्यार्थविशेषाकारारोपोऽपि तत्र बुद्धेः बहिर्गमनापेक्षाभावादेव नासम्भवः.

एतेन "**वाल्लभेतु विषयेन्द्रियसम्पर्काद् मनसि निर्विकल्पकं जायते. तत् किं निर्विषयं सविषयं वा? सविषयत्वे केन** विषयाकारः आरोप्यते? **बुद्धिवृत्तेः पश्चाद् भावितत्वाद्. यदि तद् निर्विकल्पकं ज्ञानं स्वभावादेव विषयम् अवगाहते चेद् विषयप्रकारमपि अवगाहेत, बुद्धिवृत्तेः का आवश्यकता**? इत्यस्यापि पर्यनुयोगस्य समाधानं जायतएव. यस्मात् निर्विकल्पकं हि तावत् समनस्केन्द्रियजनितं ज्ञानं सविषयकमेव. तत्र अवभातस्य अनवगतविशेषाकारस्य वस्तुनः पश्चाद् संकल्पविकल्पात्मकमनोगृहीतस्य विशेषाकारस्य बुद्धिवृत्त्या ग्रहणपूर्वकं निर्विकल्पकज्ञाने तद्विशेषाकाराधानम्. तेनच निर्विकल्पकज्ञानक्षणे विशेषाकारवत्तया अनवभातप्रकारता-कांक्षायामेव पश्चाद् बुद्धेः विशेषाकारावभासकतापि संशयभ्रमाध्यवसायाद्यन्यतमबुद्धिवृ-त्तिरूपा सुवचा. इयमेव खलु बुद्धेः आवश्यकता. यदि उच्येत मनसैव तद् भवतु तदा इदम् आलोच्यतां मनसोऽपि का आवश्यकता? यदि पुरोवस्थितवस्तुसंयुक्तस्यापि चक्षुषो मनःसाचीव्याभावे तद्ग्रहणसामर्थ्यानुपलम्भाद् आवश्यकता अस्त्येव इति चेत् तदा तेनैव न्यायेन बुद्धेरपि आवश्यकत्वम् अंगीकार्यम्. तथाहि अमनस्कपुरुषस्य इन्द्रियाणां विषयसंयोगेऽपि विषयानुपलम्भदर्शनाद् यथा मनसः आवश्यकता तथैव समनस्कपुरुषस्यापि इन्द्रियसंयुक्तार्थोपलम्भक्षणे विषयविशेषाकारादेः यदि उपलम्भनैयत्यं चेत् तदा अनवबोधसंशयभ्रमानुदयप्रसंगः.

अथ अनुपलम्भनैयत्यं चेद् अध्यवसायप्रत्यभिज्ञास्मृत्यनुदयप्रसंगः. ततः संकल्पविकल्प-हेतुना मनसा स्वकार्यकरणेऽपि अनवबोधसंशयभ्रमाध्यवसायस्मृत्यादेः उपलम्भादेव मनोभिन्नायाः बुद्धेः अंगीकारोऽपि आवश्यकएव. नहि ज्ञानं स्वस्वभावादेव स्वविषयम् अवगाहतइति बाह्याभ्यन्तरकरणनिरपेक्षेण स्वभावेनैव लोके विषयावभासनं सम्भवदुक्तिकम्.

एतेन "**किञ्च बुद्धौ यदि विषयाः सन्ति इति मतं तर्हि योगाचारमतापत्तिः नहि बुद्धौ बहिर्वद् विषयाः सम्भवन्ति अपितु वासनारूपतयैव**" इति आपादनमपि निरस्तं वेदितव्यम्. यस्मात् "**तदेतत्(नामरूपकर्मत्रिकं) त्रयं सद् एकम् अयम् आत्मा, आत्मो एकः सन् एतत्त्रयम्**" (बृह.उप.१।६।३) इति एकस्य त्र्यात्मकता त्रयाणां च एकात्मकता चेति तादात्म्यवादिनाम् अस्माकं मते "**सर्वं सर्वमयम्**" इतिच श्रुत्यनुरोधाद् प्रागपि इन्द्रियार्थसंयोगाद् इन्द्रियार्थवस्तुनो नामात्मकतया बुद्धौ विद्यमानता. तथा वस्तुन्यपि नामवद्बुद्धेरपि रूपात्मकतया विद्यमानतायां दोषाभावात्. विद्यमानयोरपि नामरूपयोः आविर्भावस्तु पाञ्चभौतिकपदार्थानां शब्दस्पर्शरूपरसगन्धत-न्मात्राद्द्वारा तत्तद्ग्रहणोपकरणभूतैः इन्द्रियैः सह परस्परसंनिकर्षव्यापारद्वारकएव, समानस्वरोपेतयो इतरेतरपार्श्ववर्तिनोः द्वयोः तन्तुवाद्ययोः एकस्य वादने अपरेस्मिन् स्वरानुरणनवत्. इन्द्रियाणाञ्च मनोहंकारसात्त्विकबुद्धिरूपाभ्यन्तरकरणव्यापारैः उपकृतानां पुरोवस्थितविषयेण सह सम्पर्के सति तस्मिन् "**चक्षुषा आलोच्य वस्तूनि विकल्प्य मनसा तथा अहंमत्यापि अहंकाराद् बुद्ध्चैव हि अध्यवस्यति**" इति प्रणालिकयैव ज्ञेयताविर्भावः. तस्माद् यथा सौत्रान्तिकनये अर्थसारूप्यं ज्ञानप्रामाण्यघटकं तथा वाल्लभनये ज्ञानाविर्भूतनामादिसारूप्यम् अनुभूतिगोचरस्य वस्तुनः प्रमेयताघटकम् इति आस्थेयम्.

एतेन "**मायया मनस्यपि विषयाकाराक्षेपसम्भवात्. किंवा मायया निर्विकल्पकज्ञानएव विषयाकाराक्षेपसम्भवाद् व्यर्थो बुद्धिवृत्यंगीकारः**" इत्युक्तिरपि परास्ता भ्रमात्मकज्ञाने विषय-तद्बहिष्ट्व-बहिरिन्द्रियग्राह्यत्वादीनां विनैव सर्वावभास-कतोपलम्भकत्वदर्शनात् न प्रमात्मकेऽपि ज्ञाने एतेषां प्रत्यक्षगोचरत्वं वा अनुमेयत्वं वा व्यर्थम् इति शक्यशंकं, सौत्रान्तिकमतत्यागेन योगाचार-माध्यमिकमतप्रवेशापत्तेः.

अपिच ''**इन्द्रियार्थसन्निकर्षाद् मनसि यद् ज्ञानं जायते तत् किं मन:परिणामरूपम्? किंवा मन:समवायी मनोधर्म:? किंवा मनसि अर्थाकारारोप:?. प्रथमे निर्विकल्पकं मन:परिणाम:, सविकल्पकं च बुद्धिपरिणाम: इति गौरवम्. वृत्तिरपि बुद्ध्यवस्थाविशेषएव तै: अंगीक्रियते**'' इति यद् उच्यते तत्रापि वाल्लभमतीयप्रक्रियानुरोधाद् एतेषां विकल्पानां न एकसत्त्वे अपरासत्त्वरूपविरुद्धकल्पता. तस्माद् इन्द्रियार्थसंनिकर्षाद् मनसि जायमानं निर्विकल्पकं ज्ञानं हि आदौतु विषयोपरञ्जितमनसः साधारणपरिणामविशेषरूपएव. सः परिणामविशेषो जायमानो मनःसमवायितया मनोधर्मरूपोऽपि कुतो न भवेत्! भवतु च तेन मनसि संस्काररूपेण अवस्थितस्य वस्तुविषयकसंकल्पविकल्पोद्बोधनम्. तेषाञ्च पुनः बुद्धिं प्रति मनसा कृतेन प्रदर्शनेन बुद्धौ सविकल्पकज्ञानोत्पत्तिरपि भवित्री. ननु कल्पनागौरवम् इति चेत् न, यथा सौत्रान्तिकनये ज्ञानातिरिक्तज्ञेयांगीकारेऽपि न कल्पनागौरवं तथैव वाल्लभनयेऽपि सौत्रान्तिकेन सोढव्यमेव.

किञ्च ''**माया यदि भगवतो व्यामोहिका शक्ति: तर्हि सर्वस्य विज्ञानस्य भ्रान्तत्वापत्ति:. यदि सर्वभवनरूपाशक्ति: तर्हि विज्ञानस्य भ्रमत्वानापत्ति:**'' इति या आपत्तिः प्रदर्शिता तत्रापि बाह्यविषय-तद्ग्राहकबाह्याभ्यन्तरकरण-तथाभूतकरणोपहितजीवचैतन्यम् एतेषां च मिथः संयोगवियोगादिव्यापारानुकूल्यं च एवमादिसर्वं भगवतः सर्वभवनसामर्थ्यरूपमायायाः कार्यम्. एतद्वैपरीत्येन बाह्यवस्तुनि स्वभासकानुभूतिवैपरीत्यं बाह्यवस्त्वभासके ज्ञाने स्वावभासितवस्तुवैपरीत्यं च व्यामोहिकायाः मायायाः कार्यम् इति न कापि अनुपपत्तिः.

किञ्च ''**वाल्लभमते ज्ञानं जडं चेतनं वा? जडत्वे विषयप्रकाशनासम्भवात्. चेतनत्वे आत्मनो जडत्वापत्ते:, एकत्र चैतन्यद्वयानंगीकारात्. अथ चैतन्यं चेतनस्य आत्मनो धर्मएव इति मतं तर्हि शरीरादिसंघातस्य आत्मनि अध्यासात् आत्मचैतन्येनैव प्रकाशसम्भवाद् अलं बुद्धिवृत्त्या मानसे ज्ञाने अर्थारोपेण**'' इति यद् आपादितं तत्र तादात्म्यवादिनि वाल्लभमते एवं प्रश्नाक्षेपावेव तावद् न उपपद्येते, सर्वस्यापि जडचेतनरूपस्य जगतो ब्रह्मोपादानकत्वेन ब्रह्मतादात्म्यांगीकारेण परस्परतादात्म्यस्यापि अभ्युपगतत्वेनैव तादात्म्यस्य च भेदसहिष्ण्वभेदरूपतयापि अंगीकारात्. भेदव्यवहारोप-

पत्तये तावत् प्रक्रियातु उपपादनीयैव वाल्लभैरपि. तत्र ऋते चार्वाकमतं सर्वेषामपि वादिनां मतेषु — ज्ञानाद्वैतवादिनो वा भवन्तु ज्ञानज्ञेयद्वैतवादिनो वा — एते जडरूपाएव चित्ताहंकारमनोबुद्धयः चक्षुस्त्वग्घ्राणरसनश्रवणेन्द्रियाणि च भवन्ति. तेष्वेतेषु — बिम्बप्रतिबिम्बन्यायेन वा भवतु अयोगोलकन्यायेन वा — ज्ञानोत्पत्तिः वा ज्ञानोत्पत्तिभ्रान्तिः वा सर्वैः खलु अकामैरपि अवश्यांगीकार्यैव, अन्यथा प्रत्यक्षानुत्पादप्रसंगापत्तिरिति "न सार्वजनिकं दुःखम् एकः सोढुम् इह अर्हति!" नूनं तदेतत्तु सर्ववादिनां दुःखं सर्वैः मिलित्वैव सहनीयम्!

याच "**बुद्धिवृत्तिः बुद्धेः अर्थाकारावस्थाविशेषः इति तदपि न उपपद्यते. बुद्धौ विषयाभावात् तस्य विषयस्य च घटादेः बाह्यत्वात्. मायया आक्षेपोऽपि समानाकारस्यैव न वस्तुतो विषयस्य तथानुभावात्. एतस्माद् वरं बुद्धेः बहि:नि:सरणमेव तथात्वे सिद्धान्तहानि:. बहि:नि:सरणाभावे बुद्धौ अर्थाकारो विषयेन्द्रियसम्पर्काद् इति सौत्रान्तिकमतप्रवेश:**" इति वाल्लभमतस्य सौत्रान्तिकान्तिकतापत्तिः प्रदर्शिता सा खलु बाह्यार्थानुमेयवादिना सौत्रान्तिकैः तावद् न प्रदर्शयितुं शक्या, यस्माद् बुद्धेः बहिर्निस्सरणे बोद्धुः बुद्धिराहित्यापत्त्या बाह्यार्थानुमितिरूपा बुद्धिरपि नोदीयात्. यदितु वेदान्तपरिभाषोक्तरीत्या तडागकुल्याकेदाराधिष्ठानेषु प्रवहमानजलवत् न बुद्धेरेव बहिःनिस्सरणं किन्तु बुद्धिवृत्तेरिति बहिःनिस्सरणमिव कश्चन ऐन्द्रियकप्रणाड्या विषयदेशसंगमः इति प्रस्तूयेत, तदापि न स संगमो अंशभेदेन तडागदेशत्यागपूर्वकं केदारदेशावस्थानं जलस्येव बुद्धिवृत्तेरपि सम्भवति. यस्मात् स्वदेशावस्थितबुद्धिवृत्तेः अंशेन स्वाधिष्ठाने बोद्धरि अवस्थानं अंशेन च विषयाधिष्ठानेऽपि अवस्थानं, तदा एतयोः द्वयोः अंशयोः ऐक्यं वा भेदो वा? ऐक्येतु "अहं घटो घटद्रष्टा च" इति प्रतीत्यापत्तिः. भेदेतु तादृशेन भिन्नेन अंशेन देहात् छिन्नेन करेणेव वस्तुग्रहणसामर्थ्यहानिः दुर्वारैव. नापि दर्पणे बिम्बाकारितासद्भावे दर्पणस्य बिम्बदेशे गमनम् अथवा बिम्बस्य दर्पणदेशे गमनम् आवश्यकम् इति केनापि उपदेष्टुं शक्यम्.

सर्वथातु सौत्रान्तिकचिन्तनकाले वाल्लभवेदान्तस्य अजातत्वेन एतयोः मतयोः मिथो यद् मौनमिव आसीद्. श्रीमद्भिः पारसनाथमहाभागैस्तु स्वासाधारणवैदुष्येन

सौत्रान्तिकवाल्लभवेदान्तिनौ परस्परमतविषयकं मौनं सेवमानौ मिथो वाग्व्यवहारव्यापृतौ कृतौ. तदेतद् महते उपकाराय सर्वेषामेव कृते भवेदिति भृशम् स्वकार्तज्ञ्यं प्रकाशयन् विरमामि.



# Dharmakīrti and Vallabha on Pratyakṣa : Juxtaposition

**Dr. Mangala Chinchore**

In the classical history of Indian philosophical traditions, we find that Pratyakṣa plays a very important role and hence there is unanimity in assigning the status of an independent Pramāṇa to Pratyakṣa (means of cognition and / or justification). In this consideration there is no differentiation possible between Cārvāka, Śramaṇic and Brāhmaṇical traditions. This is mainly because, common-sensically as well as philosophically, it is the easiest and simplest mode of getting access to reality—both internal and external—directly.

However, if one undertakes an in-depth study it becomes clear that though there is consensus in accepting Pratyakṣa as an independent Pramāna, the nature and status of it advocated by the various philosophical traditions and their numerous adherents, is not the same. And hence, there are various conceptions and interpretations of Pratyakṣa. There may be certain similarities and dissimilarities, too. Very many times similarities are emphasized, but dissimilarities also need to be paid enough attention to, if one wants to understand uniqueness of a particular philosopher or a tradition. Hence, it becomes interesting and important to investigate into such

differences of opinion and critically examine the reasons behind the respective strands.

In the present paper, I am going to pay attention to two such views, viz. of Dharmakīrti, a well-known Buddhist scholar from Mahayana tradition and of Vallabha, a spokes-man of Vedānta especially Śuddhāvaita-Vedānta. I have chosen these traditions, because Buddhism and Vedānta both have considerably influenced our day-to-day life and practices right from ancient times and even today are living traditions. More importantly, they were predominant philosophical trends of thought, such that all the rest of the traditions of Indian classical period were influenced by them in one way or the other, and hence borrowed some points and concepts from them in due course of time. Thus, both in thought and practice they have made significant contributions.

Historically, though Dharmakīrti (7th Cen. A.D.) and Vallabha (15th Cen. A.D.) were neither contemporaries, immediate predecessors and successors, nor have they involved into debates and controversies directly or indirectly, nor even Vallabha criticises the views of Dharmakīrti in general or with regard to Pratyakṣa specifically, still it is pertinent to juxtapose their views. It is because, perhaps, Dharmakīrti attempts to give a methodologically comprehensive and appropriate analysis of Pratyakṣa within the camp of Buddhism for the first time. In comparison to his predecessors like, Asañga, Vasubandhu, Dinnāga[1] etc. it is distinct, and with

regard to his successors also, it seems, it is unique. It is distinct in number of ways and hence followers of him, it seems, have not made any major alteration and modification in the analysis and explanation of Pratyakṣa given by Dharmakīrti, while writing the commentaries. Various philosophers wrote commentaries by just adding further explanatory note/s, but the core remained almost untouched. Thus, the impact of Dharmakīrtis' views on his followers and successors within the Buddhist tradition is considerably noticeable, but even on the later non-Buddhist philosophers[2] too it is not negligible. On the other hand, Vallabha is proclaimed to be a true-spokesman and as an authentic representative of Vedānta and hence is called as the founder of Śuddha-advaita (Vedānta in the purest / unqualified form). He represents a deferent school of Vedānta. He has attempted, it seems, to analyze and explain Vedāntic conception of Pratyakṣa in a simplest way and transparently. Thus, the choice of selecting the two representatives of respective traditions is not arbitrary but backed by a philosophical consideration. To compare and contrast the views of Dharmakīrti and Vallabha with reference to Pratyakṣa and find out similarities and dissimilarities, along with their contentions is the aim of the present paper, which I wish to undertake in the following two sections. In the first section, I shall consider their analysis of Pratyakṣa and point out some of the similarities or dissimilarities. On this background, in the second section, I shall inquire into the reasons behind their differences of opinion and corresponding perspectival variations anchored

in the respective philosophical foundations.

## SECTION - I

**Analyses of Pratyakṣa : Similarities and Dissimilarities**

As is well known, the word Pratyakṣa is used generally in two senses, i.e. as a Pramā (cognition) and Pramāṇa (means of cognition and / or justification.) For both Buddhists and Vedāntins in general, there is a distinction between the two. It is Pramā, which is cognitively much more important for both, yet it is Pramāṇa that is essential indeed for acquisition of the former, but it is methodologically secondary. For, unless there is an instrument to cognise (Pramāṇa), there is no possibility of cognition (Pramā). Further Pramāṇa determines both form (Ākāra) and content (Āśaya) of the cognition (Pramā). Hence, obviously, in comparison to Pramā, Pramāṇa is logically primarily important; on the other hand, Pramā is epistemically primary. Nonetheless, there can be and actually is a difference of opinion with regard to the autonomy of Pramāṇa. One may advocate that the nature and number of Pramāṇa/s are not determined independently by themselves, but by either Prameyas or Pramātā[4]. Yet, an inquiry into epistemic/cognitive considerations begins primarily from Pramā, and Pramāṇa/s derivatively, is a point to be noted. However, we cannot go into the details of this issue here.

All the philosophical traditions of Indian origin hold a

view that knowledge is essential not only for the destruction of and freedom from Avidyā/Ajñāna negatively, but for emancipation (Mukti or Nirvāṇa) by understanding the true nature of reality, positively. And this is true with regard to both Buddhism and Vedānta, as well. There are, perhaps, four important considerations commonly acceptable to both-

1. There is a possibility to know the ultimate truth, it is not unknowable.
2. There exists something 'real' to know and it can be known directly, hence Pratyakṣa Pramāṇa is upheld.
3. Such cognition of truth is basically Nirvikalpaka (indeterminate) in nature.
4. Savikalpaka (determinate) is not a legitimate kind of perception.

Let us discuss these points of similarity:

Our existence, continuation and growth as a human being is in some way or the other essentially connected to knowledge. And we are minimally being endowed with sense organs, which enable us to have access to the external world and other things remaining the same, cognition derived from them is authentic and reliable. To have sensation is a sign of our existence psycho-physically as well as epistemically. Our co-relation with the external world could legitimately be established via experience. And hence, there is a need to accept direct and immediate avenue to actual world we live in and our being essentially co-related with it. It is this,

perhaps, which compels them to advocate Pratyakṣa as a Pramāṇa, minimally.

Further, both uphold the primacy and decisive significance of Nirvikalpaka-Pratyakṣa (indeterminate-perception). The very definition of Pratyakṣa given by Dharmakīrti[5] specifically is such that it excludes anything imaginarily conceived (Kalpanā-apoḍha) and deceitful (Abhrānta) in nature. It only concentrates on veridical kind of it, bereft of any kind of non-reliability, viz illusion, hallucination, dream- experience, or even ideation and conception, etc. That is why it is non-shareable, incommunicable. It is knowledge acquired directly through acquaintance and hence is a pure form of sensation. A similar kind of conception of Pratyakṣa also is seen at the hands of Vedāntins in general and Vallabha[6] tradition in particular. According to Vallabha, Pratyakṣa is free from words, because what we experience directly cannot be expressed truly. Such an experience is pure and simple. There is a need and necessity of sense organs for getting direct cognition of the external world, which is acknowledged by both, Vallabha and Dharmakīrti.

Both hold a view that Savikalpaka-Pratyakṣa (determinate--perception) cannot be considered as a true case of it, because it is not a simple and authentic representation of reality as such. Reality as it is, exists in the world and without any adulteration could be known / apprehended directly. Since, in order of being existence is prior as contrasted to its

knowing and still further its communicating, Nirvikalpa is cognitively primarily important. There is no reflective thought essential for the cognition of reality, as it truly exists. Without intervention of thought/s and expressions—verbally or non-verbally—i.e. without the help of signs and symbols or words, we can know existence appropriately in a simpler way directly. Hence, Savikalpaka-Pratyakṣa is not a true kind of cognition of the ultimate reality but it is a distortive understanding. For the sake of communication and/or explanation of whatever we have cognised directly, we take help of expressions; but they are our ways of understanding and interpretation of facts, and not what is true basically.

Moreover, it is neither the form (Ākāra) nor relatedness (Sambandha) or any kind of determination that is essential for proper understanding of the ultimate reality. If a question is raised: Can Pratyakṣa be used as an access to ultimate reality without earlier experience or conception/s? To this both, Buddhist in general and Dharmakīrti in particular on the one hand and Vallabha specifically and Vedāntins in general on the other hand, agree on the point that the autonomy of direct cognition needs to be stressed universally. In order to make sense of a particular experience, earlier experience of it is not essential. For, it is only in the context of incidence of direct cognition, existential reality could be revealed with simplicity, clarity and distinctness, and not on the basis of its prior experience.

One more point of similarity between them needs to

be paid attention to, viz. knowledge of the ultimate reality (Paramārtha-Sat) is such that there cannot be a distinction between knower (Jñātā) object (Jñeya) and knowledge (Jñāna) at the time of its incidence. Such a three-fold distinction is pertinent only on the general level of communication, interpretation and explanation of our experience of reality, which is conventionally true (Lok-Saṁvṛtti-Sat). Ultimately, however, all of them are convergent, and hence such a distinction itself is not vital. At the moment of incidence of cognition discrimination and distinction of the above sort, is simply unavailable and hence it is primarily redundānt and futile. It is only when we wish to justify our knowledge claim/s or communicate them to others, it becomes essential to put it into an epistemic framework and its categories of understanding. Further, for incidence or occasioning of an experience, no other person is essential to be present. Nor for its being reflectively interpreted and communicated, we require another person as Naiyāyikas hold. I can very well communicate and explain to myself, in order to better understand, what I have cognised. Thus, privacy of incidence of cognition and its subjectivity needs to be maintained going against the so-called sway of objectivity.

Lastly, but not least importantly, both hold a view that we have a disposition to cognise and we are endowed with sense organs. This opens the possibility to comprehend reality, but unless and until something is given objectively to comprehend, we cannot utilize our capacities. Hence,

independently of us world can exist, but anyone knows it directly only through perception with the help of sense organs. Although we are very many times passive recipients of the comprehension/s and are capable of revelation of ultimate reality, yet whatever we cognise directly just because it is given to us, may not be true and authentic manifestation of the ultimate reality as such. And hence, deception can be there in our experiential cognition. So, there is a need to discriminate between veridical and non-veridical cognition. So long as we are alive there is a permanent possibility of deception and misunderstanding, but it is only through Pratyakṣa that we can be free from such bewitchments and misconceptions with regard to reality, as it exists.

After knowing the points of similarity, let us turn to consider some points of dissimilarity. They are as follows:

**i. Status of Pratyakṣa :** To begin with, the very status of Pratyakṣa as a Pramāṇa, for Vedāntins is secondary not only enumeratively, but also functionally. When there is a clash between the two kinds of cognition, viz. acquired through Śruti and Pratyakṣa, it is Śruti that enjoys an exclusive prerogative, context-freely. And, when we attempt to justify our directly apprehended knowledge-claim/s, Śruti is the touchstone of it ultimately. Though Vallabha admits Pratyakṣa[7] as a Pramāṇa along with the other three, viz. Śruti (Authority / Testimony), Aitihya (Tradition) and Anumāna (Inference), it is only within the framework of Śruti that the remaining three have to be made

sense of and not independently. Thus, Śruti not only puts a constraint on the nature and function of Pratyakṣa and thus operates as a determiner, but going one step ahead even they are ready to subsume Pratyakṣa under Śruti[8]. This implies that the autonomy and independence of Pratyakṣa is relative to and delimited by Śruti.

On the contrary, for Buddhists in general and Dharmakīrti in particular, the status of Pratyakṣa is completely independent and autonomous for its' functioning, and so is Anumāna, or vice-versa. As they admit only two Pramāṇas[9], viz. Pratyakṣa (perception) and Anumāna (inference), over and above these two no other means, like Śruti or Aitihya, need to be admitted. Hence, the question of reduction or subsumption of Pratyakṣa to any other Pramāṇa simply does not arise. Even though enumeratively Pratyakṣa is prior, such a priority is not determinative of the nature and status of Anumāna. For, enumerative priorities cannot be determinative of cognitive and/or justificatory priorities. Further, since Anumāna is independent, it cannot be subsumed under or reduced to Pratyakṣa either.

**ii. Meaning of Nirvikalpaka :** Although both of them define Pratyakṣa in terms of Nirvikalpaka-Pratyakṣa (indeterminate--knowledge) and deny Savikalpaka-Pratyakṣa (determinate-knowledge) as a true case of Pratyakṣa, they differ on the nature of direct cognition itself. According to Vallabha, Pratyakṣa is Indriyātmaka (consisting of and originating from Indriyas)

only, and hence Pratyakṣa-Pramā (direct-cognition), its nature and structure, is determined by the sense organs. This restrictive understanding of the meaning of Pratyakṣa will not be and indeed is not acceptable to Buddhists in general and Dharmakīrti in particular. According to him, the content of cognition need not be determined by the channels (Āyatanas /Indriyas)[10], through which it is acquired. For, it is possible to comprehend directly and immediately even without Indriyas, say for example, in the case of Mānasa-Pratyakṣa, Sva-saṁvedana or Yogī-Pratyakṣa etc.[11], we do not necessarily require sense organs. It is the content in its exhaustive form and characteristic way that is to be taken into account while defining Pratyakṣa. By its very nature and definition of it, it is Kalpanā-apoḍha (free from mental construction like ideas, thoughts concepts, imagination etc.) and Abhrānta (devoid of fictitious and erroneous modes of it like illusion, hallucination, dream, etc.), as necessary and sufficient features of it. Generally, the true nature of it is reflected in its defining features, which will enable anybody to differentiate it from indirect (A-parokṣa) cognition. And more importantly, Indriya/s are not the causal determiners of the complete nature of direct cognition, but they can open the possibility of it. Hence, they are sufficient conditions but not necessary as well. Be that as it may. For fear of digression we cannot afford to linger over this point here.

**iii. Nature of Pratyakṣa:** Pratyakṣa is not monotonously and restrictively to be understood, as Indriya-Pratyakṣa only, as

Vallabha seems to be doing. According to Dharmakīrti, Pratyakṣa is of four kinds viz. Indriya, Manasa[12], Sva-saṁvedana[13] and Yogī[14]. Except the first one the remaining three, seem to be neglected by Vallabha-Vedāntins, and hence the nature and treatment of Pratyakṣa at their hands seems to remain incomplete.

Further, even restricting to the consideration of Indriya-Pratyakṣa, unlike Vedāntins, Buddhists hold a view that Indriyas are five and not six. Manas (mind) is not an Indriya (Physical-organ), but a faculty of comprehension and has independent existence, apart from the other sense organs. The nature and function of Manas is not similar to our organismic physical body; it is qualitatively different altogether. It is through mind that we cognise various mental states, such as pain, pleasure, aversion, attraction etc, which cannot be cognised by sense organs. Secondly, Sva-Saṁvedana too cannot be considered within the framework of Indriya-Pratyakṣa, because I can cognise that I am cognizing, without the involvement of sense organs or of mind, and hence is an independent kind of Pratyakṣa. Similarly, Yogī-Pratyakṣa advocated by Buddhists, is neglected by Vedāntins. Yogī-Pratyakṣa is that kind of cognition, which enables us to know about past, present, etc. and about the subtleties of existence, which are impossible to be analysed within the framework of Indriya / Manasa / Yogī-Pratyakṣa.

**iv. Object of Pratyakṣa:** Although both are of the view that

Pratyakṣa enables us to comprehend reality truly, for Buddhists such a reality consists of unique, particular, momentary features (Sva-lakṣaṇas), which are susceptible to change (Anityatā) and are non-substantial (Anātmatā) in nature. On the contrary, for Vallabha, reality is Nitya and Śaśvata (eternal and permanent). And it consists only of universal transcendental principle, i.e. Brahman. According to Buddhists, particularity and uniqueness is a built-in nature of Svalakṣaṇa/s,[15] i.e. ontological-existence. And hence, differentiation and distinction is given to us and we do not fabricate it due to our Avidyā or Māyā, as Vedāntins, it seems, attempt to argue. To discriminate and differentiate is embedded in the phenomenal/e-mpirical world, which is not ultimately true nature of reality, is the contention of Vedāntins. It is wrong to hold that differences and distinctions don't exist ontologically, but are creations of our mind and its webs, according to Buddhists. Rather, distinctions and differentiations are given to us and determined by the very nature of ontological reality and are not always the products of our wild-imagination. Hence, even though both are ready to accept Nirvikalpaka-Pratyakṣa, the meaning and nature of it at their hands is different. According to Buddhists Nirvikalpaka is incommunicable, not because of non-existence of differentia and uniqueness, but due to generality of the nature of words. Whereas for Vedāntins, it seems, that reality is incommunicable because of its uniformly being one and hence, no differences are ultimately real. Differentiations totally being products of mind and language, the truly real is 'neti neti' i.e. not so discriminated.

**v. Nature of Savikalpaka :** Even though, prima facie, both deny Savikalpaka Pratyakṣa as a legitimate variety of it, the meaning of Savikalpaka too seems to be different. Whenever a distinction between part and whole (Aṁśa and Aṁśin) is held, it is significant conventionally (Lok-Vyavahāra-Sat) in the phenomenal world only and it is a product of the play of God (Prabhu-līlā) for Vedāntins like Vallabha. Whereas, Buddhists in general and Dharmakīrti in particular, argues that Savikalpaka is not a true case of Pratyakṣa at all, but is articulation and formulation of already cognised something directly (Adhyavaseya), and hence it is to be considered appropriately under Anumāna. Since for cognition of something directly and its justification, Pratyakṣa is enough. Such a knowledge--claim of the object of cognition directly (Grāhya) can alone be demonstrated or established (Adhyavaseya) by the corresponding object so acquired (Artha-sārūpya). As when we try to explain and communicate about our cognition of the ultimate reality it is not a matter of dogma but requires proof (Adhyavaseya), in order to be claimed as a true piece of knowledge. It is like-truth but not truth, though it is not illusion (Bhrama) for that reason. Thus, Savikalpaka is neither illusion nor fictitious one, but truth attempted to be captured with approximation in thoughts and words, based on our understanding of the facts conventionally (Lok-Saṁvrtti--Sat). There is nothing like a play of God or otherwise. There is continuity experienced by us but it is relative and contextual, which could be made sense of only within the framework of change (A-nityatā) and non-substantiality

